ओमाङोश्च ६ । १ । ९५ ॥

[1]ओमि आङि चाऽत्परे पररूपमेकादेशः स्यात् । शिवायों नमः । शिव-एहि- ॥

[2]अन्तादिवच्च ६ । १ । ८५ ॥

योऽयमेकादेशः स पूर्वस्याऽन्तवत्परस्याऽऽदिवत्स्यात् । शिवेहि ॥

[3]अकः सवर्णे दीर्घः ६ । १ । १०१ ॥

अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात । दैत्यारिः । श्रीशः । विष्णूदयः । होतॄकारः ॥

---

स आदिर्यस्य समुदायस्य-'अस्' इत्यस्य, तस्य टिसञ्ज्ञा । एवञ्च शकन्ध्वादित्वाट्टेः पररूपे 'अस्' इत्यस्य स्थाने ईकारे आदेशे जाते 'मनीषा' इति सिद्धम् । मनीषा=बुद्धिः ।

आकृत्या=स्वरूपेणैव गण्यते इति—आकृतिगणः, अयं=शकन्ध्वादिः । एवञ्च येषु शब्देषु शिष्टप्रयोगात् पररूपं करणीयं ते शब्दा अत्र गणे बोध्या इत्यर्थः ।

'आद्गुणः' इत्यत 'आ' दिति वर्त्तते, तदाह—अत्परे इति । अवर्णादोमि, आङि च परे इति सरलोऽर्थः ।

शिवेहीति । 'शिव-आ इही' त्यवस्थायां अ+आ इत्यत्र सवर्णदीर्घोऽपि प्राप्नोति, आ+इहि इत्यत्र गुणोऽपि प्राप्नोति । तत्र 'धातूपसर्गयोः कार्यमन्तरङ्गम्, अन्यद्बहिरङ्ग' मिति परिभाषया धातूपसर्गकार्यस्य गुणस्यान्तरङ्गत्वादादौ प्रवृत्त्या 'शिव+एही' ति जाते, वृद्धौ प्राप्तायाम् 'ओमाङोश्चे' त्यनेन ('अन्तादिवच्चे'ति शास्त्रप्रवृत्त्या 'ए' इत्यस्याऽऽङ्त्वात्) पररूपे 'शिवेही'ति सिद्धम् । हे शिव ! त्वमत्र आगच्छेति तदर्थः ।

'इको यणचि' इत्यतः 'अचि' इति, 'एकः पूर्वपरयोः' इति सम्पूर्णमधिकारसूत्रं चानुवर्तते । अत आह—अचि पर इत्यादि ।

---

१ अवर्ण से ओम् और आङ् परे रहते पूर्वपरके स्थानमें पररूप एकादेश हो ।
२ यह जो एकादेश है, वह पूर्व के अन्तवत् हो, और पर के आदिवत् हो ।
३ अक् से सवर्ण अच् परे रहते पूर्व के स्थान में दीर्घरूप एकादेश हो ।

एङः पदान्तादति ६ । १ । १०९ ॥

[1]पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव ॥

[2]सर्वत्र विभाषा गोः ६ । १ । १२२ ॥

लोके, वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात्, पदान्ते । गोअग्रम् । गोऽग्रम् । एङन्तस्य किम् ? । चित्रग्वग्रम् । पदान्ते किम् ? गोः ॥

[3]अनेकाल् शित्सर्वस्य १ । १ । ५५ ॥

[ अनेकाल् य आदेशः स सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने स्यात् ] ॥

—इति प्राप्ते ॥

ङिच्च १ । १ । ५३ ॥

[4]ङिदनेकालप्यन्त्यस्यैव स्यात् ॥

---

'अमि पूर्वः' इत्यतः 'पूर्वं' इति, 'एङि पररूपम्' इत्यतो 'रूपम्' इति चानुवर्तते । अत आह—पूर्वरूपमिति ।

'एङः पदान्तादती'ति सूत्रादेङ इति, 'प्रकृत्यान्तः पादम्' इति सूत्रात् 'प्रकृत्या' इति चानुवर्तते, अत आह-एङन्तस्येत्यादि ।

चित्रेति । अत्र 'एकदेशविकृतमनन्यवत्' इति न्यायेन 'गु'शब्दे गोशब्दत्वस्य सत्त्वेऽपि, 'विकृतावयवनिबन्धनकार्ये नाऽयं न्याय' इति गुशब्दे नैङन्तत्वमिति भावः ।

'गोरि'ति । गो—अस् इत्यवस्थायां गो इत्यस्य 'यचि भ'मिति भसंज्ञा, न पदसंज्ञा । 'ङसिङसोश्चे'ति पूर्वरूपं, रुत्वं, विसर्गश्चेति तत्सिद्धिः ।

अनेकालिति । 'अलोऽन्त्यस्य, 'आदेः परस्य' इत्यनयोरपवादोऽयम् । आरम्भसामर्थ्यादाह—अनेकालपीति ।

---

१ पदान्त एङ् से 'अत्'—( ह्रस्व अकार ) परे रहते, पूर्वपर के स्थान में पूर्वरूप एकादेश हो । २ लोक में अथवा वेद में एङन्त जो गो शब्द उसको प्रकृतिभाव हो, विकल्प करके, पदान्त में । ३ अनेकाल् जो आदेश और शित् जो आदेश वह सम्पूर्ण के स्थान में हो । ४ ङित् जो अनेकाल् आदेश वह भी अन्त्य के ही स्थान में हो ।

अवङ् स्फोटायनस्य ६ । १ । १२३ ॥

[1]पदान्ते एङन्तस्य गोरवङ् वा स्यादचि। गवाग्रम्। गोऽग्रम्। पदान्ते किम् ?। गवि ॥

इन्द्रे च ६ । १ । १२४ ॥

[2]गोरवङ् स्यादिन्द्रे । गवेन्द्रः ।

दूराद् धूते च ८ । २ । ८४ ॥

[3]दूरात्सम्बोधने वाक्यस्य टेः प्लुतो वा स्यात् ॥

[4]प्लुतप्रगृह्या अचि नित्यम् ६ । १ । १२५ ॥

एतेऽचि प्रकृत्या स्युः । आगच्छ कृष्णा ३ अत्र गौश्चरति ॥

[5]ईदूदेद् द्विवचनं प्रगृह्यम् १ । १ । ११ ॥

ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात्। हरी एतौ। विष्णू इमौ। गङ्गे अमू ॥

[6]अदसो मात् १ । १ । १२ ॥

---

दूरादिति। 'वाक्यस्य टेः प्लुत उदात्तः' इत्यधिक्रियते। 'सर्वः प्लुतः साहसमनिच्छता विभाषा कर्तव्यः' इति हि भाष्यम्।

प्लुतेति। अत्र नित्यपदं प्रायिकं, 'नित्यप्रहसित' इत्यादाविव। तेन 'मणीवोष्ट्रस्ये' त्यत्र न प्रकृतिभावः।

'प्रकृत्याऽन्तः पादम्'—इत्यतः 'प्रकृत्या' इत्यनुवर्तते।

'पचेते' इत्यादौ प्रगृह्यत्वार्थं तदन्तविधिमाश्रित्योक्तम्—ईदूदेदन्तमिति।

'आद्यन्तवदेकस्मिन्' इति सूत्रानुसारादुदाहरति—हरी एतावित्यादि।

---

१ पदान्त में एङन्त जो गो शब्द उसको अवङ् आदेश हो, विकल्प करके, अचपरे रहते।

२ गो शब्द को अवङ् आदेश हो, इन्द्र शब्द परे रहते, पदान्त में।

३ दूर से सम्बोधन में जो वाक्य-उसकी टि को प्लुत हो, विकल्प करके।

४ प्लुत और प्रगृह्य ये अच् परे रहते नित्य प्रकृति से रहते हैं।

५ ईदन्त, ऊदन्त और एदन्त जो द्विवचन, उनकी प्रगृह्य संज्ञा हो।

६ अदस्शब्द सम्बन्धी मकार से परे जो ईत्, ऊत्, उनकी प्रगृह्य संज्ञा हो।

अस्मात्परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः। रामकृष्णावमू आसाते। मात्किम्? । अमुकेऽत्र।

**चादयोऽसत्त्वे १ । ४ । ५७ ॥**

[1] अद्रव्यार्थाश्चादयो निपाताः स्युः ॥

**प्रादयः १ । ४ । ५८ ॥**

[2] एतेऽपि तथा स्युः ॥

**निपात[3] एकाजनाङ् १ । १ । १४ ॥**

एकोऽच् निपात आङ्वर्जः प्रगृह्यः स्यात्। इ इन्द्रः। उ उमेशः। [4] वाक्यस्मरणयोरङित्। आ एवं नु मन्यसे!। आ एवं किल तत्!। अन्यत्र ङित्। ईषदुष्णम्—ओष्णम् ॥

---

'इदूदेत्' इत्यनुवृत्तावपि अदस्शब्दसम्बन्धिमकारात्परस्यैकारस्याऽसम्भवादाह—ईदूताविति।

अत्र द्विवचनाननुवृत्तिरिति सूचनाय बहुवचनमुदाहृतम्—अमी इति।

अमुकेऽत्रेति। असति माद्ग्रहणे एकारोऽप्यनुवर्त्तेत, माद्ग्रहणे कृते तु मकाराद्व्यवहितपरस्यैकारस्याऽसम्भव इति न तदनुवृत्तिः।

'प्राग्रीश्वरात्' इत्यतो 'निपाताः' इत्यनुवर्तते इत्यभिप्रेत्याह-निपाता इति। 'लिङ्गसंख्यानन्वयित्वमद्रव्यत्वम्'।

'चादयोऽसत्त्वे' इत्यतो 'असत्त्वे' इति, 'निपाता' इति चानुवर्त्याह-एतेऽपीति।

'प्रगृह्यम्' इत्यनुवर्तते, 'एकाच्' इति च कर्मधारयः-इत्येतदभिप्रायेणाह-एकोऽजिति।

'ईषदर्थे, क्रियायोगे, मर्यादाऽभिविधौ च यः।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥'

---

१ अद्रव्यार्थक जो चादि, उनकी निपात सञ्ज्ञा होती है। २ अद्रव्यार्थक जो प्रादि, उनकी भी निपात सञ्ज्ञा होती है। ३ आङ् से भिन्न जो एकाच् निपात, उनकी प्रगृह्य सञ्ज्ञा होती है। ४ वाक्य और स्मरण अर्थ में 'आङ्' (ङित्) नहीं है, किन्तु 'आ' ही है। (अर्थात्–) वाक्यस्मरण से अन्यत्र 'आ' यह ङित् (आङ्) है।

**ओत्[1] १ । १ । १५ ॥**

ओदन्तो निपातः प्रगृह्यः स्यात् । अहो ईशाः ॥

**सम्बुद्धौ[2] शाकल्यस्येतावनार्षे १ । १ । १६ ॥**

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति । विष्ण इति । विष्णविति ॥

**मय[3] उञो वो वा ८ । ३ । ३३ ॥**

मयः परस्य उञो वो वा स्यादचि । किम्वुक्तम् । किमु उक्तम् ॥

**[4]इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६ । १ । १२७ ॥**

पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि परे । ह्रस्वविधिसामर्थ्यान्न स्वरसन्धिः । चक्रि अत्र । चक्रयत्र । पदान्ता इति किम् ? । गौर्यौ ।

---

'प्रगृह्यम्' इति, 'निपातः' इति च द्वयमनुवर्तते । तदन्तविधिरित्याह—ओदन्त इति । अहो इत्यखण्डनिपातः ।

'ओत्' इति,'प्रगृह्यम्' इति चानुवर्त्तते । ऋषिशब्दोऽत्र वेदवाचीत्यभिप्रेत्याह—सम्बुद्धिनिमित्तक इत्यादि । शाकल्यो लोपस्य मर्ता, पाणिनिर्नेति व्याख्यानुसारेण शाकल्यमते विष्ण इतीत्युदाहृतम् ।

'ङमो ह्रस्वात्' इत्यतोऽचीत्यनुवर्तते । अत आह–अचीति । 'इको यणचि' इत्युत्तरं 'मय उञो वो वा' इति सूत्रकरणेनापि प्रकृतिभावलाभसम्भवे पुनस्त्रिपाद्यां तत्सूत्रकरणन्तु वत्वस्याऽसिद्धत्वादनुस्वारवारणायेत्याशयेनोदाहृतं—किम्वुक्तमिति । 'एङः पदान्तात्' इत्यतः प्रथमाविभक्तिविपरिणतम् 'पदान्तात्' इति, 'प्लुतप्रगृह्या' इत्यतः 'अचि' इति चानुवर्त्तते । अत आह—अचीति । ह्रस्वोत्तरमपि यदि यण् स्यात्, तर्हि ह्रस्वविधानमेव व्यर्थं स्यादिति भावः ।

---

१ ओदन्त जो निपात उसकी प्रगृह्यसंज्ञा हो ।

२ सम्बुद्धिनिमित्तक जो ओकार उसकी प्रगृह्यसंज्ञा हो, विकल्प करके, अवैदिक इतिशब्द परे रहते ।

३ मय् से परे जो उञ् उसको व आदेश हो, विकल्प करके, अच् परे रहते ।

४ पदान्त इक् को ह्रस्व हो, असवर्ण अच् परे रहते, विकल्प करके ।

**अचो रहाभ्यां द्वे ८ । ४ । ४६ ॥**

अचः[1] पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । गौर्य्यौ ।

❀न समासे[2] । वाप्यश्वः ॥

**ऋत्यकः[3] ६ । १ । १२८ ॥**

ऋति परे पदान्ता अकः प्राग्वद्वा । ब्रह्म ऋषिः । ब्रह्मर्षिः । पदान्ताः किम् ? । आर्च्छत् ॥ ❀ इत्यच्सन्धिः ❀

## अथ हल्सन्धिप्रकरणम् ।

**[4]स्तोः श्चुना श्चुः ८ । ४ । ४० ।**

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । रामश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ॥

**शात्[5] ८ । ४ । ४४ ।**

---

'यरोऽनुनासिकेऽनुनासिको वा' इत्यतः 'यरः' इति, 'वा' इति चानुवर्त्योक्तं—यर इति ।

ऋत्यकः । 'इकोऽसवर्णे शाकल्यस्य ह्रस्वः' इत्यनुवर्त्तते ।

'एङः पदान्तात्' इति, 'इकोऽसवर्णे' इत्यतः 'शाकल्यस्य ह्रस्वः' इति चानुवर्त्योक्तं-प्राग्वदिति । आर्च्छदिति । अत्र 'आडजादीनाम्' इति जातस्याऽऽडागमस्य धात्ववयवत्वेन पदान्तत्वाऽभाव इति भावः ।

---

अत्र स्थान्यादेशयोरेव यथासङ्ख्यं, न तु निमित्तकार्यिणोः, नापि निमित्तादेशयोः, 'शात्' इति ज्ञापकादित्यभिप्रेत्योदाहरति—रामश्चिनोतीति ।

'तोः षि' इत्यतः 'तोः' इति, 'न पदान्तात्' इत्यतः 'त' इति चानु-

---

१ अच् से परे जो रेफ और हकार, उनसे परे जो यर्, उसको द्वित्व हो, विकल्प करके । २ समासघटक जो पदान्त इक् उसको ह्रस्व नहीं हो, असवर्ण अच् परे रहते । ३ पदान्त अक् को ह्रस्व होता है, ह्रस्व ऋकार परे रहते , विकल्प से ।

४ सकार, तवर्ग के स्थान में शकार, चवर्ग के योग में शकार, चवर्ग आदेश हों । अर्थात् सकार को शकार आदेश हो, और तवर्ग को चवर्ग हो ।

५ शकार से परे जो तवर्ग उसको चुत्व नहीं हो ।

शात्परस्य तवर्गस्य चुत्वं न स्यात्। विश्नः। प्रश्नः।

**ष्टुना[1] ष्टुः ८। ४। ४१॥**

स्तोः ष्टुना योगे ष्टुः स्यात्। रामष्षष्ठः। रामष्टीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे॥

**न[2] पदान्ताट्टोरनाम् ८। ४। ४२॥**

पदान्ताट्टवर्गात्परस्याऽनामः स्तोः ष्टुर्न स्यात्। षट् सन्तः। षट् ते। पदान्तात्किम्?। ईट्टे। टोः किम्?। सर्पिष्टमम्।

**❀[3]अनाम्नवतिनगरीणामिति वाच्यम्।**

षण्णाम्। षण्णवतिः। षण्णगर्य्यः॥

---

वर्त्तते। तत्र प्राप्तस्य चुत्वस्य निषेधायाह-चुत्वमिति। 'विश्न'इत्यत्र 'विच्छगतौ' इति धातोर्यजयाचविच्छप्रच्छेति भावे नङि, च्छ्वोः शूडिति शादेशः। एवं प्रश्न इत्यत्रापि। 'स्तोः श्चुना' इत्यतः 'स्तोः' इति षष्ठ्यन्तमनुवर्ततेऽत आह—स्तोरिति। अत्रापि स्थान्यादेशयोरेव यथासङ्ख्यम्, न तु निमित्तकार्यिणोः, 'तोः षि' इति ज्ञापकादित्यभिप्रायेणाह-रामष्टीकते। पेष्टेति।

'स्तोः श्चुना' इत्यतः 'स्तोः' इति, 'ष्टुना ष्टुः' इत्यतः 'ष्टुः' इति चानुवर्त्तते, अत आह-स्तोः ष्टुरिति। ईट्टे इति। तिङन्तमेतत्। ईड् ते इति स्थिते ष्टुत्वे चर्त्वम्॥ पदान्ते षकारस्य जश्त्वेन टवर्ग एव भविष्यतीति'ष्टुने' त्यतः 'ष्टुग्रहणानुवृत्त्यैव सिद्धे किं टोर्ग्रहणेनेति पृच्छति—टोःकिमिति। 'ह्रस्वात्तादौ तद्धिते' इति जातस्य षत्वस्य जश्त्वं प्रत्यसिद्धत्वात् पदान्ते षकारो दृश्येतेत्यभिप्रेत्योक्तं-सर्पिष्टममिति।

अनामिति। भो सूत्रकार! त्वया सूत्रे अनामिति न्यूनमुक्तं, त्वया-'न पदान्ताट्टोरनाम्नवतिनगरीणा' मित्येवं सूत्रं करणीयमित्यर्थः।

---

१ सकार, तवर्ग के स्थान में षकार, टवर्ग के योग में षकार, टवर्ग आदेश हों। अर्थात् सकार को षकार हो और तवर्ग को टवर्ग हो। २ पदान्त टवर्ग से परे जो नाम् भिन्न तवर्ग और सकार, उनको ष्टुत्व नहीं हो। ३ पदान्त टवर्ग से परे नाम्, नवति और नगरी के अवयव से भिन्न जो तवर्ग उसको ष्टुत्व नहीं हो।

[1]तोः षि ८ । ४ । ४३ ॥

तवर्गस्य षकारे परे न ष्टुत्वम् । सन्षष्ठः ॥

[2]झलां जशोऽन्ते ८ । २ । ३९ ॥

पदान्ते झलां जशः स्युः । वागीशः ॥

[3]यरोऽनुनासिकेऽनुनासिको वा ८ । ४ । ४५ ॥

यरः पदान्तस्याऽनुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः । एतद्मुरारिः । ❀[4]प्रत्यये भाषायां नित्यम् । तन्मात्रम् । चिन्मयम् ।

[5]तोर्लि ८ । ४ । ६० ॥

तवर्गस्य लकारे परे परसवर्णः स्यात् । तल्लयः । विद्वाँल्लिखति । नकारस्याऽनुनासिको लकारः ॥

[6]उदः स्थास्तम्भोः पूर्वस्य ८ । ४ । ६१ ॥

उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात् ॥

---

'न पदान्ताट्टोरनाम्' इत्यतः 'न' इति, 'ष्टुना' ष्टुः' इत्यत 'ष्टुः' इति चानुवर्तते इत्याह—न ष्टुत्वमिति । 'पदस्य' इत्यनुवर्त्त्य—पदस्य अन्ते इति सम्बन्धमभिप्रेत्याह—पदान्ते इति । 'पदस्य' इत्यनुवर्तते । तदन्तविध्यलोन्त्य-परिभाषोभयलब्धमर्थमाह—यरः पदान्तस्येति ।

प्रत्यये इति । यरः पदान्तस्य प्रत्ययावयवेऽनुनासिके परे भाषायां नित्यमनुनासिको भवतीत्यर्थः । 'वेद्मि' 'बध्नाती' त्यादेस्तु नाऽनुनासिकः, यरः पदान्तत्वाऽभावात् । 'अनुस्वारस्य ययी' ति सूत्रात् 'परसवर्ण' इत्यनुवर्त्तते इत्याह—परसवर्ण इति ।

'अनुस्वारस्य' इति सूत्रतः 'सवर्ण' इत्यनुवर्त्तते इत्याह—पूर्वसवर्ण इति ।

---

१ तवर्ग को षकार परे रहते ष्टुत्व नहीं हो । २ पदान्त में विद्यमान जो झल् उनके स्थान में जश् हो । ३ पदान्त यर् को अनुनासिक हो, अनुनासिक परे रहते, विकल्प करके । ४ पदान्त यर् के स्थान में नित्य अनुनासिक हो, प्रत्ययावयव अनुनासिक परे रहते, भाषा ( अर्थात् लोक ) में । ५ तवर्ग को लकार परे रहते पर सवर्ण हो । ६ उद् से परे जो स्था और स्तम्भ उनको पर्व का सवर्ण आदेश हो ।

[1]तस्मादित्युत्तरस्य १ । १ । ६७ ॥

पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाऽव्यवहितस्य परस्य ज्ञेयम् ॥

[2]आदेः परस्य १ । १ । ५४ ॥

परस्य यद्विहितं तत्तस्याऽऽदेर्बोध्यम् । इति सस्य थः ॥

[3]झरो झरि सवर्णे ८ । ४ । ६५ ॥

हलः परस्य झरो लोपो वा स्यात्, सवर्णे झरि ॥

[4]खरि च ८ । ४ । ५५ ॥

खरि परे झलां चरः स्युः । इत्युदो दस्य—तः । उत्थानम् । [ उत्स्थानम् ] । उत्तम्भनम् । [ उत्स्तम्भनम् ] ।

[5]झयो होऽन्यतरस्याम् ८ । ४ । ६२ ॥

झयः परस्य हस्य वा पूर्वसवर्णः स्यात् । नादस्य, घोषस्य, संवारस्य, महाप्राणस्य तादृशो वर्गचतुर्थः । वाग्घरिः । वाग्हरिः ॥

---

'तस्मिन्निति निर्दिष्टे' इत्यतो निर्दिष्टे' इत्यनुवर्तते, अत आह—अव्यवहितस्येति । 'अलोऽन्त्यस्य' त्यस्यापवादोऽयं योगः । सस्येति । अघोषस्य, महाप्राणप्रयत्नवतश्च सस्य तादृश एव थकार इत्यर्थः । तस्य 'झरो झरी'ति पाक्षिको लोपः । लोपाऽभावे तु थस्य श्रवणं, न तु खरि चेति चर्त्वं, चर्त्वं प्रति थकारस्याऽसिद्धत्वात् । हल इति । 'हलो यमां यमि लोपः' इत्यतः 'हलः' इति, 'लोपः' इति च पदमनुवर्तते ।

'झलां जश् झशि' इत्यतो 'झलाम्' इति, 'अभ्यासे चर्च' इत्यतः 'चर्' इति च बहुवचनविपरिणतमनुवर्तते, अत आह—खरीति ।

---

१ पञ्चमी का निर्देश ( उच्चारण ) करके क्रियमाण जो कार्य वह वर्णान्तर से व्यवधानरहित जो पर, उसके स्थान में हो ।

२ पर को कहा गया जो कार्य वह उस ( पर ) के आदि को हो ।

३ हल् से परे जो झर् उसका लोप हो, विकल्प करके, सवर्ण झर् परे रहते ।

४ झलों के स्थान में चर् आदेश हो, खर् परे रहते ।

५ झय् से परे जो हकार उसको पूर्वसवर्ण हो, विकल्प करके ।

[1]शश्छोऽटि ८ । ४ । ६३ ॥

पदान्ताज्झयः परस्य शस्य छो वा स्यादटि । तद् शिव इत्यत्र दस्य श्चुत्वेन जकारे कृते, खरि चेति जकारस्य चकारः । तच्छिवः । तच्शिवः ।

*[2]छत्वममीति वाच्यम् । तच्छ्लोकेन ॥

[3]मोऽनुस्वारः ८ । ३ । २३ ॥

मान्तस्य पदस्याऽनुस्वारः स्याद्धलि । हरिं वन्दे ॥

[4]नश्चाऽपदान्तस्य झलि ८ । ३ । २४ ॥

नस्य, मस्य चाऽपदान्तस्य झल्यनुस्वारः स्यात् । यशांसि । आक्रंस्यते । झलि किम् ? । मन्यते ।

[5]अनुस्वारस्य ययि परसवर्णः ८ । ४ । ५८ ॥

स्पष्टम् । [ =अनुस्वारस्य ययि परे परसवर्णः स्यात् ] । शान्तः ॥

[6]वा पदान्तस्य ८ । ४ । ५९ ॥

पदान्तस्याऽनुस्वारस्य ययि परे परसवर्णो वा स्यात् । त्वङ्करोषि । त्वं करोषि ।

मो [7]राजि समः क्वौ ८ । ३ । २५ ॥

---

'वा पदान्तस्य' इत्यतः 'पदान्तस्ये'ति विभक्तिविपरिणामेनानुवर्त्तते, तदाह-पदान्तादिति । 'झयो होऽन्यतरस्या'मित्यतो 'झय' इत्यनुवर्त्तते इत्यपि बोध्यम् । 'पदस्य' इत्यधिकृतम् । 'हलि सर्वेषाम्' इत्यतो हलीति चानुवर्तते । 'येन विधिः' इति तदन्तविधिस्तदाह-मान्तस्येति ।

'मोऽनुस्वारः' इत्यतः 'मः' इति, 'अनुस्वारः' इति च पदद्वयमनुवर्तते, अत आह-नस्य मस्येत्यादि । स्पष्टमिति । अनुस्वारस्य ययि परे परसवर्णः स्यादित्यर्थः ।

---

१ पदान्त झय् से परे जो शकार उसको छकार हो, विकल्प करके, अट् परे रहते । २ पदान्त झय् से परे शकार को छकार हो, अम् परे रहते, विकल्प करके ।
३ मान्त पद को अनुस्वार हो, हल् परे रहते । ४ अपदान्त जो नकार, मकार, उनको अनुस्वार हो, झल् परे रहते । ५ अनुस्वार को परसवर्ण हो, यय् परे रहते ।
६ पदान्त अनुस्वार को परसवर्ण हो विकल्प करके यय् परे रहते । ७ क्विबन्त राज् धातु परे रहते सम् के मकार को मकारही आदेश हो ( अनुस्वार नहीं हो ) ।

क्विबन्ते राजतौ परे समो मस्य म एव स्यात्। सम्राट्॥

[1]हे मपरे वा ८। ३। २६॥

मपरे हकारे परे मस्य मो वा स्यात्। किम् ह्मलयति। किं ह्मलयति॥ * [2]यवलपरे यवला वा। किय्ँ ह्यः। किं ह्यः। किव्ँ ह्वलयति। किं ह्वलयति। किल्ँ ह्लादयति। किं ह्लादयति।

[3]नपरे नः ८। ३। २७॥

नपरे हकारे परे मस्य नो वा स्यात्। किन् ह्नुते। किं ह्नुते।

[4]ङः सि धुट् ८। ३। २९॥

ङात्परस्य सस्य धुड् वा स्यात्॥

[5]आद्यन्तौ टकितौ १। १। ४६॥

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः। षट्त्सन्तः। षट् सन्तः।

---

'मोऽनुस्वारः' इत्यतः 'मः' षष्ठ्यन्तमनुवर्तते। मस्य मविधानमनुस्वार-व्यावृत्त्यर्थमित्यभिप्रेत्याह—मस्य म एवेति।

'मोऽनुस्वारः' इत्यतः 'मः' इति षष्ठ्यन्तम्, 'मो राजि' इत्यतो 'मः' इति प्रथमान्तं चानुवर्त्तते, तदाह—मस्य मो वेति। यवलेति वार्त्तिके 'मः' इति षष्ठ्यन्तं, 'हे'इति चानुवर्तते। यवलपरे हकारे परे मकारस्य यवला वा इत्यर्थः।

नपर इति। 'मः' इति षष्ठ्यन्तम्, 'हे' इति 'वा' इति चानुवर्तते। टश्च कश्च टकौ, टकावितौ ययोस्तौ टकितौ। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायमाश्रित्याह—टित्किताविति। यथासङ्ख्यपरिभाषालब्धमर्थमाह—क्रमादिति।

---

१ मपरक हकार परे रहते मकार को मकार ही हो, विकल्प करके। २ यवल-परक हकार परे रहते मकार को क्रम से य व ल हों, विकल्प करके। ३ नपरक हकार परे रहते मकार को नकार हो, विकल्प करके। ४ ङ से परे जो सकार उसको धुट् का आगम हो विकल्प करके। ५ टित्कित् जिस समुदाय को कहे जाएँ उसका-आदि अवयव टित् हो, और अन्तावयव कित् हो।

[1]ङ्णोः कुक् टुक् शरि ८ । ३ । २८ ॥

ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि ।

* [2]चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम् । प्राङ्ख् षष्ठः । प्राङ्क्षष्ठः । प्राङ् षष्ठः ॥ सुगण्ठ्षष्ठः । सुगण्ट्षष्ठः । सुगण्षष्ठः ॥

[3]नश्च ८ । ३ । ३० ॥

नान्तात्परस्य सस्य धुड् वा स्यात् । सन्त्सः । सन्सः ॥

[4]शि तुक् ८ । ३ । ३१ ॥

पदान्तस्य नस्य शे परे तुग् वा स्यात् । सञ्छम्भुः । सञ्च्छम्भुः । सञ्च्शम्भुः । सञ्शम्भुः ॥

[5]ङमो ह्रस्वादचि ङमुण् नित्यम् ८ । ३ । ३२ ॥

---

'हे' मपरे 'वा' इत्यतो 'वा' इत्यनुवर्त्याह—वेति । चय इति । चय्प्रत्याहारीयवर्णानां स्थाने स्ववर्गीया द्वितीया वर्णा भवन्ति इत्यर्थः ।

'हे मपरे'—इत्यतो 'वा' इति वर्तते । 'ड' इति पञ्चमी, 'सि' 'इति सप्तमी । तथा च 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति परिभाषया'सि' इति सप्तम्याः षष्ठ्यर्थत्वमित्यत आह—सस्य धुड्वेति । 'डः सि धुट्' इत्यत 'सि धुट्' इति 'वा' इति चानुवर्तते, 'सि' इति सप्तम्या षष्ठ्यर्थमित्यत आह—सस्येति ।

'पदस्य' इत्यधिकृतम्, 'नश्च' इत्यतः 'नः' इति 'वा' इति चानुवर्तते । 'नः' इति पञ्चम्याः 'नश्च' इत्यत्र चरितार्थतया, 'शि' इति सप्तम्याश्च निरवकाशतया पञ्चम्याः षष्ठ्यर्थत्वमित्यभिप्रायेणाह—पदान्तस्येति । सञ्छम्भुरिति ।

'ञ्छौ, ञ्चछा, ञ्चशा, ञशाविति चतुष्टयम् ।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्' ॥

ङम इति । 'नित्यप्रहसितः' इत्यादाविव प्रकृते नित्यपदं प्रायःपदार्थकम् । तेन

---

१ ङकार, णकार को कुक् टुक् आगम हो, विकल्प करके, शर् परे रहते । २ चय् को द्वितीय अक्षर हो, शर्परे रहते, पौष्करसादि आचार्य के मत में ।

३ नान्त पद से परे जो सकार उसको धुट् का आगम हो, विकल्प से । ४ पदान्त नकार को श परे रहते तुक् हो, विकल्प से । ५ ह्रस्व से परे जो ङम्, तदन्त जो पद, उससे परे जो अच्, उसको नित्य ङमुट् ( ङुट् णुट् नुट् ) आगम हो ।

ह्रस्वात्परो यो ङम्, तदन्तं यत्पदं, तस्मात्परस्याऽचो नित्यं ङमुडागमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ॥

[1]समः सुटि ८ । ३ । ५ ॥

समो रुः स्यात् सुटि ॥

[2]अत्राऽनुनासिकः पूर्वस्य तु वा ८ । ३ । २ ॥

अत्र=रुप्रकरणे रोः पूर्वस्याऽनुनासिको वा स्यात् ॥

[3]अनुनासिकात्परोऽनुस्वारः ८ । ३ । ४ ॥

अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः स्यात् ।

[4]खरवसानयोर्विसर्जनीयः ८ । ३ । १५ ॥

खरि, अवसाने च पदान्तस्य रेफस्य विसर्गः स्यात् ।

---

'इको यणचि' 'सुप्तिङन्तं पदं' 'सनाद्यन्ता' इत्यादौ ङमुड् न भवतीति तत्त्वम् ।

अचि इति सप्तम्याः षष्ठ्यर्थत्वमाश्रित्याह—अच इति ।

'मतुवसो रु सम्बुद्धौ छन्दसि' इत्यतो 'रु' इत्यनुवर्तते । तदाह—रुरिति । सुडन्नागम एव गृह्यते, व्याख्यानात् । सूत्रे—'अत्र' इत्यस्य—रुप्रकरणे इत्यर्थः । राविति वक्तव्येऽत्रग्रहणात्ससजुष इति विहितस्य प्रकृते न ग्रहणम् । 'मतुवसो रु' 'इत्यतो' 'रु' इत्यनुवर्त्त्य दिग्योगलक्षणपञ्चमीं च कृत्वाह—रोः पूर्वस्येति ।

'अनुनासिकात्' इति ल्यब्लोपे पञ्चमीत्यभिप्रेत्याह—अनुनासिकं विहायेति । 'अनुनासिका'दित्यस्य हि अर्शआद्यजन्ततया अनुनासिकघटितप्रयोगमित्यर्थः । 'रोः' पूर्वस्य' इति अनुवर्त्त्य, योग्यतया विभक्तिं विपरिणमय्य च व्याचष्टे—रोः पूर्वस्मात् पर इति ।

'पदस्य' इत्यधिकृतं, 'रो रि' इत्यतो 'र' इत्यनुवर्त्तते, तदन्तविध्यलोन्त्य-

---

१ सम् के मकार को रु त्व हो सुट् परे रहते । २ इस रुप्रकरण (८ । ३) में रु से पूर्व अच् को अनुनासिक आदेश होता है । ३ इस ( अष्टमाध्याय तृतीयपाद स्थित ) रुप्रकरण में अनुनासिकघटितप्रयोग को छोड़ कर रु से जो पूर्व अच् उससे परे अनुस्वार (का) आगम हो । ४ खर् परे रहते, और अवसान में विद्यमान जो पदान्त रेफ, उसको विसर्ग हो ।

* [1]सम्पुम्कानां सो वक्तव्यः । सँस्स्कर्ता । संस्स्कर्ता ॥

[2]पुमः खय्यम्परे ८ । ३ । ६ ॥

अम्परे खयि पुमो रुः स्यात् । पुँस्कोकिलः । पुंस्कोकिलः ॥

[3]नश्छव्यप्रशान् ८ । ३ । ७ ॥

अम्परे छवि नान्तस्य पदस्य रुः स्यात्, न तु प्रशान्शब्दस्य ॥

[4]विसर्जनीयस्य सः ८ । ३ । ३४ ॥

खरि विसर्जनीयस्य सः स्यात् । चक्रिँस्त्रायस्व । चक्रिंस्त्रायस्व । अप्रशान् किम् ? । प्रशान् तनोति । पदान्तस्येति किम् ? । हन्ति ॥

[5]नॄन् पे ८ । ३ । १० ॥

नॄनित्यस्य रुः स्याद्वा पकारे परे ॥

[6]कुप्वोः ≍क ≍पौ च ८ । ३ । ३७ ॥

---

विधिलब्धमर्थमाह—पदान्तस्येति । 'खर्परे शरि वा विसर्गलोपः' इत्यस्य, 'कुप्वोः≍क≍पौ च' इत्यस्य चापवादोऽयं विसर्गविधिः । 'मतुवसोः'—इत्यतः 'रु' इत्यनुवर्त्याह—रुरिति ।

'पदस्य' इत्यधिकृत, तच्च विशेष्यं, 'न' इति च विशेषणम् । विशेषणेन च तदन्तविधिः । 'रु' इति, 'अम्परे' इति चानुवर्तते इत्याह—अम्परे इति ।

'खरवसानयोः' इत्यतः 'खरी' त्यनुवर्त्याह—खरीति ।

'नॄ'निति द्वितीयान्तानुकरणं लुतषष्ठ्यन्तम् । 'रु' इति' 'उभयथर्क्षु' इत्यत 'उभयथे'ति चानुवर्त्तते । 'पे' इत्यकारो न विवक्षितः । तेन नॄँः प्रीणाति, नॄँः पुनाति इत्यादौ रुत्वं सिध्यतीत्यभिप्रेत्याह—नॄनित्यस्येति । 'शर्परे विसर्जनीयः' इत्यतो 'विसर्जनीयः' इति चकारेणानुकृष्यते । 'विसर्जनीयस्य सः'

---

१ सम् और पुम् और कान् इनके विसर्ग को सत्व हो । २ अम्परक खय् परे रहते पुम् के म को रुत्व हो । ३ अम्परक छव् परे रहते नान्तपद को रुत्व हो, परन्तु प्रशान्शब्दावयव नकारको रुत्व नहीं हो । ४ खर् परे विसर्ग को स आदेश हो । ५ नॄन् के नकार को रुत्व होता है, पकार परे रहते, विकल्प से ।

६ कवर्ग, पवर्ग परे रहते विसर्ग को जिह्वामूलीय और उपध्मानीय (क्रम से) हों । ( चकार से—विसर्ग भी हो ) ।

कवर्गे, पवर्गे च परे विसर्गस्य ≍क ≍पौ स्तः। चाद्विसर्गः। नॄँ≍पाहि। नॄँः पाहि। नॄं≍पाहि। नॄंः पाहि। नॄन् पाहि॥

[1]तस्य परमाम्रेडितम् ८।१।२॥

द्विरुक्तस्य परं रूपमाम्रेडितं स्यात्॥

[2]कानाम्रेडिते ८।३।१२॥

'कान्'नकारस्य रुः स्यादाम्रेडिते परे। काँस्कान्। कांस्कान्॥

[3]छे च ६।१।७३॥

ह्रस्वस्य छे परे तुगागमः स्यात्। शिवच्छाया॥

[4]पदान्ताद्वा ६।१।७६॥

दीर्घात्पदान्ताच्छे परे तुग् वा स्यात्। लक्ष्मीच्छाया। लक्ष्मीछाया॥

इति हल्सन्धिप्रकरणम्।

---

इत्यतो 'विसर्जनीयस्य' इति चानुवर्त्तते। तदाह—विसर्गस्येति। तेन 'गजो गच्छति' इत्यादौ रोरुत्वं सिध्यति। विसर्जनीयपदानुवृत्त्यभावे तु रोः स्थानेऽपि तदादेशापत्तिः स्यादिति बोध्यम्।

तस्येति। 'सर्वस्य द्वे' इत्यनुवर्तनादभ्यासद्वित्वविषये नास्य प्रवृत्तिः॥

'कान्' इति द्वितीयान्तानुकरणं लुप्तषष्ठ्यन्तम्, तल्लब्धमर्थमाह—कान्नकारस्येति।

'ह्रस्वस्य पिति कृति तुक्' इत्यतः 'तुक्' इति, 'ह्रस्वस्य' इति चानुवर्तते। तदाह—ह्रस्वस्येति।

'ह्रस्वस्य पिति कृति' इत्यतः 'तुक्' इति, 'छे च' इत्यतः 'छे' इति, 'दीर्घात्' इति सूत्रं चानुवर्ततेऽत आह—दीर्घादित्यादि। दीर्घस्यैवायं तुक्, न तु ह्रस्वस्य, 'सेनासुराच्छाया' इति निर्देशात्। तत्फलं—लक्ष्मीच्छाया, चेच्छिद्यते इत्यादौ छकारश्रवणम्।

---

१ जिनको आष्टमिक द्वित्व हुआ हो, उनके पर रूप ( द्वितीयशब्द ) की आम्रेडित संज्ञा हो। २ कान् के नकार को रुत्व हो, आम्रेडित परे रहते।

३ ह्रस्व को तुक् आगम हो, छकार परे रहते।

४ पदान्त दीर्घ को तुक् आगम हो, छकार परे रहते, विकल्प करके।

# अथ विसर्गसन्धिप्रकरणम् ।

[1]विसर्जनीयस्य सः ८ । ३ । ३४ ॥

खरि [ विसर्जनीयस्य सः स्यात् ] । विष्णुस्त्राता ॥

[2]वा शरि ८ । ३ । ३६ ॥

शरि विसर्गस्य विसर्गो वा स्यात् । हरिः शेते । हरिश्शेते ॥

[3]ससजुषो रुः ८ । २ । ६६ ॥

पदान्तस्य सस्य, सजुष्शब्दस्य च रुः स्यात् ॥

[4]अतो रोरप्लुतादप्लुते ६ । १ । ११३ ॥

अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः ।

[5]हशि च ६ । १ । ११४ ॥

तथा । [ =अप्लुतादतः परस्य रोरुः स्याद्धशि ] । शिवो वन्द्यः ॥

[6]भोभगोअघोअपूर्वस्य योऽशि ८ । ३ । १७ ॥

एतत्पूर्वस्य रोर्यादेशः स्यादशि । देवा इह । देवायिह । भोस्

---

'खरवसानयोः' इत्यतः 'खरि' इत्यनुवर्त्तते, तदाह—खरीति ।

'विसर्जनीयस्य सः' इत्यतः 'विसर्जनीयस्य' इति, 'शर्परे विसर्जनीयः' इत्यतो 'विसर्जनीय' इति चानुवर्त्त्योक्तं—विसर्गस्य विसर्ग इति । 'पदस्य' इत्यनुवर्त्तते ।

तदन्तविध्यलोन्त्यविधिभ्यां लब्धमर्थमाह—पदान्तस्येति । 'एङः पदान्तां' दित्यतः 'अती' ति, 'ऋत उत्' इत्यत 'उत्' इति चानुवर्तते । तदाह—अप्लुतादिति ।

'अतो रोरप्लुतात्' इति, 'उत्' इति चानुवर्तते । 'रोः सुपिः' इत्यतो 'रोः'

---

१ विसर्ग के स्थान में सकार हो, खर् परे रहते । २ शर् परे रहते विसर्ग को विसर्ग ही हो, विकल्प करके । ३ ( सान्त जो पद और सजुष्शब्दान्त जो पद उनके अन्त्य के सकार को रुत्व हो । अर्थात् )—पदान्त जो सकार और सजुष् शब्दान्त जो सकार उसको रुत्व हो । ४ अप्लुत अकार से परे जो रु उसको उकार हो, अप्लुत अकार परे रहते । ५ अप्लुत अकार से परे जो रु, उसको उकार हो, हश् परे रहते । ६ भो भगो अघो और अपूर्वक जो रु, उसको यकार आदेश हो, अश् परे रहते ।

भगोस् अघोस् इति सान्ता निपाताः। तेषां रोर्यत्वे कृते—

[1]हलि सर्वेषाम् ८। ३। २२॥

भो-भो-अघो-अपूर्वस्य यस्य लोपः स्याद्धलि। भो देवाः। भगो नमस्ते। अघो याहि॥

[2]रोऽसुपि ८। २। ६९॥

अह्नो रेफादेशः स्यान्न तु सुपि। अहरहः। अहर्गणः॥

[3]रो रि ८। ३। १४॥

रेफस्य रेफे परे लोपः स्यात्॥

[4]ढ्रलोपे पूर्वस्य दीर्घोऽणः ६। ३। १११॥

ढ–रेफयोर्लोपनिमित्तयोः पूर्वस्याऽणो दीर्घः स्यात्॥

---

इत्यनुवर्ततेऽत आह—रोरित्यादि। तेषामिति। भोसादिनिपातानामित्यर्थः। तेन 'विभाषा भवद्भगवदघवतामोचावस्ये'ति निष्पन्नानामपि ग्रहणं सिध्यतीति भावः। 'भोभगो' इत्यतो 'भोभगोअघोअपूर्वस्य' इति, 'व्योर्लघु'इत्यतो 'व्यो'रिति, 'लोपः शाकल्यस्य' इत्यतो 'लोपः' इति चानुवर्त्तते। तत्र वस्यैतत्पूर्वस्याऽसम्भवाद्यकारस्येति लब्धन्तदाह–भोभगोअघोअपूर्वस्य यस्येत्यादि।

'अहन्' इति सूत्रानुवृत्तेराह—अह्न इति। अहरह इति। वीप्सायां द्विर्वचनम्। अहन्–अहनित्यलौकिकं वाक्यम्। प्रतिदिनमिति तदर्थः। अहर्गणः—दिनसमूहः। ज्यौतिषशास्त्रप्रसिद्धदिनसमूहो वा। रोरिति। सूत्रे 'रः'–षष्ठ्यन्तं, 'रि'–सप्तम्यन्तम्। 'ढो ढे लोपः' इति सूत्रात् लोपपदानुवृत्तेराह–लोप इति।

ढश्च रश्च द्रौ। द्रौ लोपयतीति द्रूलोपः, तस्मिन् द्रूलोपे इति विग्रहः। फलितमाह-ढरेफयोर्लोपनिमित्तयोरिति। ढकारलोपनिमित्ते ढकारे, रेफलोपनिमित्ते रेफे च परे पूर्वस्याऽणो दीर्घ इति यावत्। उत्तरपदाधिकारनिवृत्त्यर्थमत्र पूर्वग्रहणं,

---

१ भो भगो अघो अपूर्वक जो यकार, उसका लोप हो, हल् परे रहते।

२ अहन् शब्द को रेफादेश हो, परन्तु सुप् परे हो तो नहीं हो। ३ रेफ का लोप हो, रेफ परे रहते। ४ ढ और रेफ के लोप में निमित्तभूत जो ढ और रेफ, वे परे रहते ( उनके ) पूर्व अण् को दीर्घ हो।

पुना रमते । हरी रम्यः । शम्भू राजते । अणः किम् ? । तृढः । वृढः ।

'मनस् रथ' इत्यत्र रुत्वे कृते हशि चेत्युत्वे, रो रीति लोपे च प्राप्ते-

[1]विप्रतिषेधे परं कार्यम् १ । ४ । २ ॥

तुल्यबलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते । 'पूर्वत्राऽसिद्ध'-मिति 'रो री' त्यस्याऽसिद्धत्वादुत्वमेव । मनोरथः ॥

[2]एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ६ । १ । १३२ ॥

अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्याद्धलि, न तु नञ्समासे । एष विष्णुः । स शम्भुः । अकोः किम् ? । एषको रुद्रः । अनञ्समासे किम् ? । असः शिवः । हलि किम् ? एषोऽत्र ॥

[3]सोऽचि लोपे चेत्पादपूरणम् ६ । १ । १३४ ॥

'स' इत्यस्य सोर्लोपः स्यादचि, पादश्चेल्लोपे सत्येव पूर्य्येत । सेमाम-विड्ढि प्रभृतिम् । सैष दाशरथी रामः ॥

इति विसर्गसन्धिः ।

इति पञ्चसन्धिप्रकरणम् ॥

---

तेन व्यस्तेऽपि पूर्वस्य दीर्घः सिद्ध्यति । तदाह-पुना रमते इत्यादि । तुल्येति । अन्यत्रान्यत्र लब्धावकाशयोः शास्त्रयोरेकत्र ( लक्ष्ये ) समावेशस्तुल्यबलविरोधः ।

सोऽचीति । 'सस्' इति प्रथमान्तानुकरणं लुप्तषष्ठ्यन्तम् । 'सुलोप' इति वर्त्ततेऽत आह-स इत्यस्येति । पादशब्देनाऽत्र सूत्रे ऋक्पादवत्, श्लोकपादोऽपि ग्राह्य इत्याशयेन ऋक्पादमुदाहृत्य, श्लोकपादमप्युदाहरति—सैष दाशरथिरिति । अत्र लोपाऽभावे सस्य रुत्वे यत्वे लोपे तस्याऽसिद्धत्वाद् वृद्ध्यादेरभावे नवाक्षरत्वा-पत्त्याऽष्टाक्षराऽनुष्टुप्पादभङ्गः स्पष्ट एव । इति विसर्गसन्धिः ।

---

1 तुल्यबल विरोध होने में परकार्य हो । 2 ककार रहित जो एतत् और तत् शब्द, तदर्थगतसङ्ख्याभिधायी जो सु, उसका लोप हो, हल् परे रहते, नञ् समास को छोड़कर । 3 तत् शब्द के सु का लोप हो, अच् परे रहते, यदि लोप होने पर ही पाद की पूर्ति होती हो तो । इति विसर्गसन्धिः ॥

## अथ षड्लिंगेषु अजन्तपुँल्लिङ्गप्रकरणम् ।

[1]अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १ । २ । ४५ ॥

धातुं, प्रत्ययं, प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ।

[2]कृत्तद्धितसमासाश्च १ । २ । ४६ ॥

कृत्तद्धितान्तौ, समासाश्च प्रातिपदिकसंज्ञाः स्युः ॥

[3]स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ४ । १ । २ ॥

[ [1]ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ] । सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा भ्याम् भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसि भ्याम् भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ।

[4]ङ्याप्प्रातिपदिकात् ४ । १ । १ ॥

[4]प्रत्ययः ३ । १ । १ ॥

---

अर्थवदिति । लोके अर्थविषयकबोधजनकत्वम् अर्थवत्त्वम् । अत्र अर्थवद्ग्रहणं धनं वनमित्यादौ प्रतिवर्णं प्रातिपदिकसंज्ञावारणाय । अहन्नित्यादौ च प्रातिपदिकसंज्ञावारणाय। 'अधातु'रिति पर्युदासः । क्विबन्त-विजन्तेषु धातुत्वानपायात्प्रातिपदिकत्वसिद्धयेऽत्र सूत्रे कृद्ग्रहणम् । दाशरथिरित्यादौ तद्धितान्ते प्रत्ययान्तत्वेन पूर्वेणाऽप्राप्तेः प्रातिपदिकत्वसिद्धये च तद्धितग्रहणम् । समासपदं तु नियमार्थम् । 'यत्र सङ्घाते पूर्वो भागः पदमुत्तरस्तु प्रत्ययो न, तस्य चेद्भवति, तर्हि समासस्यैव'

---

१ धातुभिन्न, प्रत्ययभिन्न और प्रत्ययान्ततदादि भिन्न जो अर्थवान् शब्दस्वरूप, वह प्रातिपदिकसंज्ञक हो। २ कृदन्त, तद्धितान्त और समास—ये प्रातिपदिकसंज्ञक हों । ३ ङ्यन्त आबन्त और प्रातिपादिक से परे स्वादि प्रत्यय हों ।

४ पञ्चमाध्याय की समाप्ति पर्यन्त इन तीनों सूत्रों का अधिकार जानना ।

---

१ अयं पाठोऽस्माभिर्वद्धितः ।

परश्च ३ । १ । २ ॥

—इत्यधिकृत्य । ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ।

[1]सुपः १ । ४ । १०३ ॥

सुपस्त्रीणि-त्रीणि वचनान्येकश एकवचन-द्विवचन-बहुवचन-संज्ञानि स्युः ।

[2]द्व्येकयोर्द्विवचनैकवचने १ । ४ । २२ ॥

द्वित्वैकत्वयोरेते स्तः ॥

[3]विरामोऽवसानम् १ । ४ । ११० ॥

वर्णानामभावोऽवसानसंज्ञः स्यात् । रुत्वविसर्गौ । रामः ॥

[4]सरूपाणामेकशेष एक विभक्तौ १ । २ । ६४ ॥

एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ।

---

इति च नियमाकारः । तेन 'गामभ्याज शुक्लां दण्डेने'त्यादौ वाक्यस्य प्रातिपदिकसञ्ज्ञा न भवति ।

ङ्यन्तादिति । इयं वृत्तिः—स्वौजसमौडित्यस्येति ध्येयम् ।

'तिङस्त्रीणित्रीणि' इत्यतः 'त्रीणि त्रीणि' इति, 'तान्येकवचने' त्यतः 'एकवचनद्विवचनबहुवचनान्येकशः'—इति चानुवर्त्याह–त्रीणि त्रीणीति ।

द्व्येकयोरिति । भाष्यकृता—तु 'एकवचनम्' इति सामान्यसूत्रं कृत्वा तस्य बाधकं 'द्विबह्वोर्द्विवचनबहुवचने' इति सूत्रं कृत्वा, एकपदं प्रत्याख्यातम् । तथा चोच्चैरित्याद्यव्ययेभ्योऽप्येकवचनं सिद्ध्यति । प्रातिपदिकार्थगते एकत्वे विवक्षिते एकवचनं, द्वित्वे विवक्षिते च द्विवचनमिति च सूत्रार्थः ।

शब्दानुशासनेऽभावो, भावो वा–वर्णानामेव सम्भवतीत्यत आह–वर्णानामिति । 'वृद्धो यूना'—इत्यत 'एवे' त्यपकृष्यतेऽत आह—सरूपाण्येवेति । तेन जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोर्नैकशेषः, तयोर्भ्यामादिषु सारूप्ये–

---

१ सुप् के जो तीन तीन त्रिक वे प्रत्येक अर्थात् एक एक करके क्रमशः एकवचन द्विवचन बहुवचन संज्ञक हों । २ द्वित्व की विवक्षा में द्विवचन हो, और एकत्वकी विवक्षामें एकवचन हो । ३ वर्णों का जो अभाव वह अवसानसंज्ञक हो । ४ विभक्तित्वावच्छिन्न यावत् विभक्ति परे रहते जिनका समान ही रूप देखा जाय, उनमें से एकही शेष रहे । ( और उससे अवशिष्ट का लोप हो ) ।

[1]प्रथमयोः पूर्वसवर्णः ६ । १ । १०२ ॥

अकः प्रथमा-द्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ॥

[2]नाऽऽदिचि ६ । १ । १०४ ॥

आदिचि [ परे ] न पूर्वसवर्णदीर्घः । 'वृद्धिरेचि' । रामौ ॥

[3]बहुषु बहुवचनम् १ । ४ । २१ ॥

बहुत्वविवक्षायां बहुवचनं स्यात् ॥

[4]चुटू १ । ३ । ७ ॥

प्रत्ययाऽऽद्यौ चुटू इतौ स्तः ॥

[5]विभक्तिश्च १ । ४ । १०४ ॥

सुप्तिङौ विभक्तिसञ्ज्ञौ स्तः ॥

---

ऽप्यौजसादौ वैरूप्यात् । 'अकः सवर्णे दीर्घः' इत्यतः 'अकः' इति, 'दीर्घः' इति च, 'इको यणचि' इत्यतः 'अचि' इति चानुवर्तते । तदाह—अक इत्यादि ।

'प्रथमयोः पूर्वसवर्ण' इत्यतो पूर्वसवर्णपदमनुवर्त्त्याह—पूर्वसवर्णेति । 'वृद्धिरेचि' इत्येतद्बाधोद्यतस्यैव 'प्रथमयोः' इति पूर्वसवर्णदीर्घस्य 'नादिचि' इत्यनेन बाधनात् 'वृद्धिरेचि' इति शास्त्रमबाधितमेवेति, तच्छास्त्रं प्रवर्तते एवेति भावः ।

'उपदेशेऽज्' इत्यत 'इत्' इति, 'षः प्रत्ययस्य' इत्यतः 'प्रत्ययस्ये' ति, 'आदिर्ञिटुडवः' इत्यतः 'आदिः' इत्यनुवर्तते । तदाह—प्रत्ययाद्याविति ।

'तिङस्त्रीणि त्रीणि' इत्यतः 'तिङः' इति, 'सुपः' इति सूत्रं चानुवर्त्ततेऽत आह—सुप्तिङाविति ।

---

१ अक् से प्रथमा और द्वितीया सम्बन्धी अच् परे रहते पूर्व और पर के स्थान में पूर्वसवर्णदीर्घ एकादेश हो । २ अवर्ण से इच् परे रहते पूर्वसवर्णदीर्घ नहीं हो ।

३ बहुत्व की विवक्षा में बहुवचन हो । ४ प्रत्यय के आदि के चवर्ग और टवर्ग की इत्संज्ञा हो । ५ सुप् और तिङ् की विभक्तिसंज्ञा हो ।

[1]न विभक्तौ तुस्माः १ । ३ । ४ ॥

विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः। इति सस्य नेत्त्वम्। रामाः॥

[2]एकवचनं सम्बुद्धिः २ । ३ । ४९ ॥

सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्॥

[3]यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १ । ४ । १३ ॥

यः प्रत्ययो यस्मात् क्रियते तदादि शब्दस्वरूपं, तस्मिन्प्रत्यये परेऽङ्गसञ्ज्ञं स्यात्॥

[4]एङ्ह्रस्वात्सम्बुद्धेः ६ । १ । ६९ ॥

एङन्ताद्, ध्रस्वान्ताच्चाऽङ्गाद्धल्लुप्यते, सम्बुद्धेश्चेत्। हे राम। हे रामौ। हे रामाः॥

[5]अमि पूर्वः ६ । १ । १०७ ॥

अकोऽम्यचि पूर्वरूपमेकादेशः स्यात्। रामम्। रामौ॥

---

'उपदेशेऽज्' इत्यतः 'इत्' इत्यनुवृत्तेराह—इत इति। इत्सञ्ज्ञका इत्यर्थः। 'सम्बोधने च' इत्यतः 'सम्बोधने' इति, 'प्रातिपदिकार्थलिङ्ग—' इति सूत्रतः 'प्रथमा' इति चानुवृत्त्योक्तं—सम्बोधने इत्यादि।

यस्मादिति। अत्र तदादिग्रहणं च 'भवामि' 'भविष्यामि' इत्यादौ विकरणविशिष्टस्याऽङ्गसंज्ञार्थम्। 'लोपो व्योर्वलि' 'हल्ङ्याब्भ्यः' इत्याभ्यां लोपहल्पदयोरनुवृत्तिः। प्रत्ययग्रहणपरिभाषया तदाद्यंशस्योपस्थितौ च तदन्तविधिस्तत्फलितमर्थमाह—एङन्तादित्यादि। सम्बुद्धेरिति। सम्बुद्धेरवयवश्चेदित्यर्थः।

'इको यण्—' इत्यतोऽचीति, 'एकः पूर्वपरयोः' इति चानुवर्ततेऽत आह—अचीति। 'उपदेशेऽज्—' 'षः प्रत्ययस्य' 'आदिर्ञिटुडवः'—इत्येतेभ्यः 'इत्' 'प्रत्य-

---

१ विभक्ति सम्बन्धी जो तवर्ग, सकार और मकार उनको इत्संज्ञा नहीं हो। २ सम्बोधन में प्रथमा का जो एकवचन ( सु ), उसकी सम्बुद्धि संज्ञा हो।

३ जो प्रत्यय जिससे किया जाय, तदादि जो शब्दस्वरूप, उसकी उस प्रत्यय के परे रहते अङ्गसञ्ज्ञा हो। ४ एङन्त और ह्रस्वान्त अङ्ग से परे जो सम्बुद्धयवयव हल् उसका लोप हो। ५ अक् से अम् सम्बन्धी अच् परे रहते पूर्व और पर के स्थान में पूर्वरूप एकादेश हो।

[1]लशक्वतद्धिते १ । ३ । ८ ॥

तद्धितवर्जप्रत्ययाऽऽद्या ल-श-कवर्गा इतः स्युः ॥

[2]तस्माच्छसो नः पुंसि ६ । १ । १०३ ॥

पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि ।

[3]अट्कुप्वाङ्नुम्व्यवायेऽपि ८ । ४ । २ ॥

अट् , कवर्गः, पवर्ग, आङ् , नुम्—एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि—रषाभ्यां परस्य नस्य णः स्यात्समानपदे । इति प्राप्ते ।

[4]पदान्तस्य ८ । ४ । ३७ ॥

पदान्तस्य नस्य णत्वं न स्यात् । रामान् ॥

[5]टा-ङसि-ङसामिनात्स्याः ७ । १ । १२ ॥

अदन्ताट्टादीनामिनादयः स्युः । णत्वम् । रामेण ॥

---

'यस्य', 'आदिः' इति चानुवर्ततेऽत आह—तद्धितवर्जेति । तद्धितभिन्नप्रत्ययाद्या इति तदर्थः । अत्र च रोमशः, सिध्मलः, नौका इत्यादौ शकारादेरित्सञ्ज्ञाया व्यावृत्तये—अतद्धित इति । तच्छब्देन पूर्वसवर्णदीर्घं परामृशन् व्याचष्टे—पूर्वसवर्णदीर्घादिति । 'रषाभ्यां नो णः समानपदे' इति सूत्रमनुवर्ततेऽत आह—रषाभ्यामिति । निमित्ताऽनधिकरणनिमित्तिमत्पदाऽघटितत्वं समानपदत्वम् । 'रषाभ्यां नो णः समानपदे' इत्यतो 'न' इत्यनुवर्त्याह—नस्येत्यादि । 'अतो भिस'—इत्यतः 'अतः' इत्यनुवर्तते । 'अङ्गस्य' इत्यधिक्रियते । विशेषणेन च तदन्तविधिरित्याह—अदन्तादिति ।

---

१ तद्धितभिन्न प्रत्यय का आदि जो लकार शकार और कवर्ग, उनकी इत्संज्ञा हो। २ पूर्वसवर्णदीर्घ से परे जो शस् का सकार उसको नकार आदेश हो। ३ अट्, कवर्ग, पवर्ग, आङ्, नुम् इनका अलग २, या जितने का सम्भव हो उनका व्यवधान होने पर भी, रेफ षकार से परे जो नकार उसको णकार हो, समानपद में।

४ पदान्त के नकार को णत्व नहीं हो। ५ अदन्त अङ्ग से परे जो 'टा' 'ङसि' और 'ङस्' उनके स्थान में क्रमसे 'इन' 'आत्' और 'स्य'—ये आदेश हों।

[1]सुपि च ७ । ३ । १०२ ॥

यञादौ सुप्यतोऽङ्गस्य दीर्घः स्यात् । रामाभ्याम् ।

[2]अतो भिस ऐस् ७ । १ । ६ ॥

[ अकारान्तादङ्गाद्भिस ऐस् स्यात् ] । अनेकाल्शित्सर्वस्य । रामैः ।

[3]ङेर्यः ७ । १ । १३ ॥

अतोऽङ्गात्परस्य ङेर्यादेशः स्यात् ।

[4]स्थानिवदादेशोऽनल्विधौ १ । १ । ५६ ॥

आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात् 'सुपि चे'ति दीर्घः । रामाय । रामाभ्याम् ॥

[5]बहुवचने झल्येत् ७ । ३ । १०३ ॥

झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः स्यात् । रामेभ्यः । सुपि किम्? । पचध्वम् ।

---

सुपि–सप्तम्यन्तं, च–अव्ययपदम् । 'अतो दीर्घो यञि' त्यतो यञीत्यनुवर्त्तते । यञीत्यल्ग्रहणात्–'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादिविधिरत आह–यञादाविति । अतः—पञ्चम्यन्तं, भिसः–षष्ठ्यन्तम्, ऐस्–प्रथमान्तम् । 'एस्' इत्यत्र सौत्रत्वान्न रुत्वविसर्गौ । अत्र 'एस्' तु न कृतः, 'अतो गुणे' इति पररूपापत्तेः । यदि तु एकारोच्चारणसामर्थ्यान्न पररूपम्, अन्यथा इसमेव विदध्यात्, गुणेनोक्तरूपसिद्धेरित्युच्यते तर्हि छन्दसि नद्यैरित्यादौ तदावश्यकमिति गृहाण ।

ङेः–षष्ठ्यन्तं, यः–प्रथमान्तम् । स्थानिवत्–अव्ययपदं ( प्रथमान्तम् ), आदेशः–प्रथमान्तम्, अनल्विधौ–सप्तम्यन्तम् ।

बहुवचने–सप्तम्यन्तं, झलि–सप्तम्यन्तम्, एत्–प्रथमान्तम् ।

---

१ यञादि सुप् परे रहते अदन्त अङ्ग को दीर्घ हो । २ अदन्त अङ्ग से परे जो भिस् उसके स्थान में ऐस् आदेश हो । ३ अदन्त अङ्ग से परे 'ङे' जो उसके स्थान में 'य' आदेश हो । ४ आदेश स्थानिवत् ( स्थानवृत्तिधर्मवान् ) हो । परन्तु स्थानी का सम्बन्धी जो अल्, तदाश्रय कोई विधि कर्त्तव्य हो तो स्थानिवद्भाव नहीं हो ।

५ झलादि बहुवचन सुप् परे रहते अदन्त अङ्ग को एकार आदेश हो ।

[1]वाऽवसाने ८ । ४ । ५६ ॥

अवसाने झलां चरो वा स्युः । रामात् । रामाद् । रामाभ्याम् । रामेभ्यः । रामस्य ॥

[2]ओसि च ७ । ३ । १०४ ॥

ओसि परेऽतोऽङ्गस्यैकारः स्यात् । रामयोः ॥

[3]ह्रस्वनद्यापो नुट् ७ । १ । ५४ ॥

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाऽङ्गात्परस्याऽऽमो नुडागमः स्यात् ॥

[4]नामि ६ । ४ । ३ ॥

नामि परेऽजन्ताङ्गस्य दीर्घः स्यात् । रामाणाम् । रामे । रामयोः । सुपि एत्वे कृते– ॥

[5]आदेश-प्रत्यययोः ८ । ३ । ५९ ॥

इण्कवर्गाभ्यां परस्याऽपदान्तस्याऽऽदेशः, प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेशः स्यात् । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्णादयोऽप्यदन्ताः ॥

---

वावसाने । वा–अव्ययपदम् । अवसाने–सप्तम्यन्तम् ।

ओसि—सप्तम्यन्तं, च—अव्ययपदम् । ह्रस्वश्च, नदी च, आप् च–एषां समाहारः–ह्रस्वनद्याप् । तस्मात्–ह्रस्वनद्यापः–पञ्चम्यन्तं, नुट् प्रथमान्तम् ।

नामि—सप्तम्यन्तम् । आदेशप्रत्यययोः–षष्ठ्यन्तम् । आदेशरूपो यः सकारः, प्रत्ययाऽवयवश्च यः सकारस्तस्य मूर्धन्यादेश इत्यर्थः । तत्र ऋटुरषाणां मूर्धस्थानिकत्वात्सर्वेषां प्राप्तावाह—ईषदिति । 'ईषद्विवृतमूष्मणा' मित्युक्तेरिति भावः । एवं–रामशब्दवत् । अदन्ताः । अदन्ताः–'पुँल्लिङ्गाः बोध्या' इति शेषः ।

---

१ अवसान में स्थित झलों के स्थान में चर् हों, विकल्प करके । २ ओस् परे रहते अदन्त अङ्ग को एकार आदेश हो । ३ ह्रस्वान्त, नद्यन्त और आबन्त जो अङ्ग, उससे परे जो आम्, उसको नुट् का आगम हो । ४ अजन्त अङ्ग को दीर्घ हो, नाम् परे रहते । ५ इण् और कवर्ग से परे जो अपदान्त का आदेशरूप सकार, और प्रत्ययावयव जो सकार उसको मूर्धन्य ( षकार ) आदेश हो ।

[1]सर्वादीनि सर्वनामानि १ । १ । २७ ॥

सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः। सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम।

( ग ) [2]पूर्वपराऽवरदक्षिणोत्तराऽपराऽधराणि व्यवस्थायामसञ्ज्ञायाम्। (ग) [3]स्वमज्ञातिधनाख्यायाम्। ( ग ) [4]अन्तरं बहिर्योगोपसंव्यानयोः। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम्॥

[5]जसः शी ७ । १ । १७ ॥

अदन्तात्सर्वनाम्नो जसः शी स्यात्। अनेकाल्त्वात्सर्वादेशः। सर्वे॥

[6]सर्वनाम्नः स्मै ७ । १ । १४ ॥

अतः सर्वनाम्नो 'ङे' इत्यस्य 'स्मै' स्यात्। सर्वस्मै।

---

सर्वादीनि–प्रथमान्तं, सर्वनामानि–प्रथमान्तम्। तद्गुणसंविज्ञानोऽयं बहुव्रीहिः, 'अदः सर्वेषा' मित्यादिनिर्देशात्।

पूर्वपरेति। पूर्वादीनि व्यवस्थायामसञ्ज्ञायां सर्वनामसञ्ज्ञानि स्युरिति गणसूत्रार्थः। स्वमिति। ज्ञातिधनान्यवाची ( आत्माऽऽत्मीयार्थवाची ) स्वशब्दः सर्वनामसञ्ज्ञः स्यात्। अन्तरमिति। बाह्ये, परिधानीये चाऽर्थेऽन्तरशब्दः सर्वनामसञ्ज्ञो भवतीति गणसूत्रार्थः।

'अतो भिस'–इत्यतो 'अतः' इति, 'सर्वनाम्नः स्मै' इत्यतः 'सर्वनाम्नः' इति पदद्वयमनुवर्तते, विशेषणेन च तदन्तविधिरित्यत आह–अदन्तादित्यादि।

'अतो भिसः' 'ङेर्यः' इत्याभ्याम् 'अतः' 'ङे' इति चानुवर्त्याह–अतः सर्वनाम्न

---

१ सर्वादि जो शब्दस्वरूप वे सर्वनामसंज्ञक हों। २ पूर्व पर अवर दक्षिण उत्तर अपर अधर-इनकी व्यवस्था और असंज्ञा में सर्वनाम संज्ञा हो। ३ ज्ञाति और धन से अन्य जो (आत्मा, आत्मीय) अर्थ उनमें स्वशब्द की सर्वनामसंज्ञा हो।

४ बहिर्योग और उपसंव्यान (पहिरना) अर्थ में अनन्तरशब्द की सर्वनाम संज्ञा हो। ५ अदन्त सर्वनाम से परे जो जस् उसके स्थान में शी आदेश हो।

६ अदन्त सर्वनाम से परे जो 'ङे' उसको 'स्मै' आदेश हो।

[1]ङसिङ्योः स्मात्स्मिनौ । ७ । १ । १५ ।

अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् ॥

[2]आमि सर्वनाम्नः सुट् । ७ । १ । ५२ ।

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्याऽऽमः सुडागमः स्यात् । एत्त्वषत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः ॥ उभशब्दो नित्यं द्विवचनान्तः । उभौ २ । उभाभ्याम् ३ । उभयोः २ । तस्येह पाठो अकजर्थः ॥ [ उभयशब्दस्य द्विवचनं नास्ति । उभयः । उभये । उभयम् । उभयान् । उभयेन । उभयैः । उभयस्मै । उभयेभ्यः । उभयस्मात् । उभयेभ्यः । उभयस्य । उभयेषाम् । उभयस्मिन् । उभयेषु ] ॥ डतरडतमौ प्रत्ययौ । 'प्रत्यय-

---

इति । अवर्णान्तादिति । अवर्णान्तादङ्गात्परस्येत्यर्थः, तेन येषां तेषामित्यादौ सुट् सिद्धिः । एत्त्वषत्वे इति । एत्त्वं-'बहुवचने झल्ये'-दित्यनेन, षत्वम्-'आदेशप्रत्यययो' रित्यनेनेति विवेकः ।

ननु सर्वनामसञ्ज्ञाकार्यमेकवचनबहुवचनयोरेवेति नित्यद्विवचनान्तोभशब्दस्य इह सर्वादिषु पाठ व्यर्थोऽत आह-तस्येति । तस्य-नित्यद्विवचनान्तस्य उभशब्दस्य । इह-सर्वादिगणे । अकजर्थः-'अव्ययसर्वनाम्नामकच् प्राक्टे'रित्यनेनोभकावित्यादावकजर्थः । नास्तीति । भाष्ये 'उभयो मणिः', 'उभये देवमनुष्याः' इति एकवचने, बहुवचने च उभयशब्दप्रयोगो दृश्यते, न तु द्विवचने तत्प्रयोगोऽत उभयशब्दस्य द्विवचनं नास्तीत्यभिप्रायः । तदेवम्-उभयः, उभये-प्रथमा ॥ उभयम्, उभयान्-द्वितीया । उभयेन, उभयैः-तृतीया । एवमग्रेऽपि ।

उभयशब्दस्य द्विवचनं नास्तीति कैयटः । अस्तीति हरदत्तः । इति=इत्यनया परिभाषया, तदन्ताः=डतर-डतम-प्रत्ययान्ताः-कतर-कतम-यतर-यतम-ततर-

---

१ अदन्त सर्वनाम से परे जो 'ङसि' और 'ङि', उनको क्रम से 'स्मात्' और 'स्मिन्' आदेश हो । २ अवर्णान्त अङ्ग से परे, सर्वनाम से विहित जो आम्, उसको सुट् का आगम हो ।

ग्रहणे तदन्तग्रहण'मिति तदन्ता ग्राह्याः। नेम इत्यर्धे। समः—सर्वपर्यायः तुल्यपर्यायस्तु न, 'यथासङ्ख्यमनुदेशः समाना'मिति ज्ञापकात्॥

[1]पूर्वपराऽवरदक्षिणोत्तराऽपराऽधराणि व्यवस्थाया-
मसञ्ज्ञायाम्। १। १। ३४।

एतेषां व्यवस्थायामसञ्ज्ञायां सर्वनामसञ्ज्ञा गणसूत्रात्सर्वत्र या प्राप्ता, सा जसि वा स्यात्। पूर्वे। पूर्वाः। असञ्ज्ञायां किम्?। उत्तराः कुरवः। [2]स्वाभिधेयापेक्षा-ऽवधि-नियमो व्यवस्था। व्यवस्थायां किम्?। दक्षिणा गाथकाः। कुशला इत्यर्थः॥

---

ततम—एकतर—एकतम—शब्दाः सर्वादिगणे बोध्या इत्यर्थः।

सर्वपर्याय इति। सर्वार्थकः समशब्दोऽत्र गणे ग्राह्य इत्यर्थः। तुल्यार्थस्य सर्वादिगणे पाठे तु 'समाना' मित्यत्र 'समेषा' मिति स्यादिति भावः।

एतेषां=पूर्वादिशब्दानां, गणसूत्रात्=‘पूर्वपरावरे’त्यादिपूर्वोक्तगणसूत्रात्, सर्वत्र=सर्वासु विभक्तिषु, या सर्वनामसञ्ज्ञा प्राप्ता, सा जसि परतो विकल्पेन भवतीत्यर्थः। उत्तराः कुरव इति। देशविशेषस्य सञ्ज्ञेयम्। (कनाडा, या दक्षिण अमेरिका)। स्वाभिधेयेति। अपेक्ष्यते इति—अपेक्षः। कर्मणि घञ्। स्वस्य अभिधेयः स्वाभिधेयः, स्वाभिधेयस्य-अपेक्षः—स्वाभिधेयाऽपेक्षः। अवधेर्नियमः—अवधिनियमः। स्वाभिधेयापेक्षश्चासाववधिनियमश्च—स्वाभिधेयापेक्षावधिनियम इति विग्रहः। तथा च स्वस्य=पूर्वादिशब्दस्य, अभिधेयः=वाच्यो यो दिग्देशकालरूपोऽर्थः, तेन अपेक्ष्यमाणो यो अवधेर्नियमः—स एव व्यवस्थेत्यर्थः। यथा 'प्रयागात्काशी पूर्वे'त्यत्र पूर्वशब्दार्थेन पूर्वादिना 'कुतःपूर्वे'त्यवधेर्नियमस्य अपेक्षणाद्भवति तत्र व्यवस्थेत्यवधेयम्।

---

१ पूर्व पर अवर दक्षिण उत्तर अपर अधर—इन शब्दों की व्यवस्था में और असंज्ञा में पूर्वोक्त गणसूत्र करके सर्वत्र नित्य पाई जो सर्वनामसंज्ञा, वह जस् परे रहते विकल्प करके हो। २ स्व—जो पूर्वादि शब्द, उनका जो अभिधेय- अर्थ, उससे अपेक्ष्यमाण जो—अवधि, उसका जो नियम—वह 'व्यवस्था' कहलाता है॥

[1]स्वमज्ञातिधनाख्यायाम् । १ । १ । ३५ ।

ज्ञाति-धनाऽन्यवाचिनः स्वशब्दस्य या प्राप्ता सञ्ज्ञा, सा जसि वा स्यात् । स्वे । स्वाः । आत्मीया, आत्मान इति वा । ज्ञाति-धनवाचिनस्तु—स्वाः । ज्ञातयोऽर्था वा ॥

[2]अन्तरं वहिर्योगोपसंव्यानयोः १ । १ । ३६ ॥

बाह्ये, परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता सञ्ज्ञा, सा जसि वा स्यात् । अन्तरे, अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे, अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥

[3]पूर्वादिभ्यो नवभ्यो वा । ७ । १ । १६ ॥

एभ्यो ङसि-ङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे ॥ एवं परादीनाम् । शेषं सर्ववत् ॥

---

ज्ञातिधनान्येति । 'स्वो ज्ञातावात्मनि स्वं, त्रिष्वात्मीये, स्वोऽस्त्रियां धने' इति कोशप्रामाण्यात्स्वशब्दस्य आत्माऽऽत्मीयज्ञातिधनानि अर्थाः. तत्र ज्ञातिधनाऽतिरिक्ते आत्मात्मीयरूपार्थे स्वशब्दस्य सर्वासु विभक्तिषु 'स्वमज्ञातिधनाख्याया'-मिति गणसूत्रेण नित्यं सर्वनामसञ्ज्ञा प्राप्ता, सा जसि परतो विकल्पेन भवतीति सूत्रार्थः ।

ज्ञातीति । ज्ञातिधनवाचिनः स्वशब्दस्य तु—जसि 'स्वाः' इत्येव रूपं भवतीत्यर्थः । प्राप्ता = 'अन्तरं वहिर्योगोपे'ति पूर्वोक्तेन गणसूत्रेण सर्वत्र नित्यं प्राप्ता । सेयं सर्वनामसञ्ज्ञा जसि परतो विकल्पेन भवतीत्यर्थः ।

एभ्यः = पूर्वोक्तेभ्यो नवभ्यः पूर्वपराऽवरदक्षिणोत्तराऽपराऽधरस्वाऽन्तर-शब्देभ्यः । परादीनां—'शब्दानां रूपाणि बोध्यानी'ति शेषः ।

---

१ ज्ञाति और धन से अन्य जो ( आत्मीय ) अर्थ, उनमें स्वशब्द की गणसूत्र से सर्वत्र नित्य पाई जो सर्वनामसंज्ञा, वह जस् परे रहते विकल्प से हो ।

२ बाह्य और परिधानीय अर्थ में अन्तरशब्द की गणसूत्र से सर्वत्र नित्य पाई जो सर्वनामसञ्ज्ञा, वह जस् परे रहते विकल्प से हो । ३ पूर्वादि नौ ९ शब्दों से परे जो ङसि और ङि, उनको क्रमसे स्मात्, स्मिन् आदेश विकल्प से हो ।

[1]प्रथमचरमतयाऽल्पाऽर्धकतिपयनेमाश्च । १ । १ । ३३ ।

एते जसि उक्तसंज्ञा वा स्युः । प्रथमे । प्रथमाः । तयः—प्रत्ययः । द्वितये । द्वितयाः । शेषं रामवत् । नेमे । नेमाः । शेषं सर्ववत् ॥ ❀[2]तीयस्य ङित्सु वा । द्वितीयस्मै । द्वितीयायेत्यादि । एवं-तृतीयः ॥ निर्जरः ।

[3]जराया जरसन्यतरस्याम् । ७ । २ । १०१ ॥

जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ । ❀[4]पदाङ्गाधिकारे तस्य च, तदन्तस्य च । [5]निर्दिश्यमानस्याऽऽदेशा भवन्ति ।

---

उक्तसञ्ज्ञाः = सर्वनामसञ्ज्ञाः ।

तय इति । प्रत्ययः = 'सङ्ख्याया अवयवे तय'बिति शास्त्रेण विहितः । एवञ्च 'प्रत्ययग्रहणे तदन्तग्रहण' मिति तयप्प्रत्ययान्तानां द्वितय–द्वय–त्रितय– त्रय– चतुष्टय–पञ्चतय–षट्तय–सप्ततयादीनां ग्रहणं बोध्यम् । तीयस्येति । तीयप्रत्ययान्तस्य ङिद्वचने परतः सर्वनामसञ्ज्ञा वा स्यादित्यर्थः ।

निर्जरः = देवः । ननु 'जराया जर' सित्यनेन जराशब्दस्य जरस् विधीयते, निर्जरशब्दे तु न जराशब्दः, किन्तु जरशब्दस्तत्रेत्यत आह–पदाङ्गाधिकारे इति । तस्य = तत्सूत्रोच्चरितस्य, तदन्तस्य च = तत्सूत्रोच्चरितान्तस्य च । 'जराया जरस्' इति चाङ्गाधिकारपठितं शास्त्रमतो जरान्तस्याऽपि निर्जरशब्दस्य जरसादेशः सुलभ इत्याशयः । नन्वेवमनेकाल्त्वान्निर्जरशब्दस्य सर्वस्य स्थाने जरसादेशः प्राप्नोति, तस्य जराशब्दान्तत्वादत आह—निर्दिश्येति । सूत्रे उच्चार्यमाणस्य जराशब्दस्यैवादेश इत्यर्थः । षष्ठीप्रकृतिजन्यप्राथमिकोपस्थिति-विषयत्वञ्च निर्दिश्यमानत्वम् । प्रकृते च 'जराया' इति षष्ठी । नन्वेवमपि निर्दिश्यमानत्वं प्रकृते जराशब्दस्यैव, न तु जरशब्दस्य, निर्जरशब्दे तु न

---

१ प्रथम, चरम, तयप्रत्ययान्तशब्द, और अल्प, अर्द्ध, कतिपय, नेम—इनकी सर्वनामसञ्ज्ञा विकल्प से हो, जस् परे रहते ।

३ जराशब्द को जरस् आदेश हो, विकल्प करके, अजादिविभक्ति परे रहते ।

४ पदाधिकार में, और अङ्गाधिकार में जो कार्य कहे हैं, वे जिसको कहे हैं, उसको हों, और वह अन्त में जिसके है, उसको भी हों ।

५ षष्ठीप्रकृतिजन्य-प्राथमिक उपस्थिति-विषय जो शब्द उसको ही आदेश होते हैं ।

(घ) एकदेशविकृतमनन्यवत्—इति जरशब्दस्य जरस् । निर्जरसौ । निर्जरसः—इत्यादि । पक्षे, हलादौ च रामवत् ॥

विश्वपाः ।

[1]दीर्घाज्जसि च । ६ । १ । १०५ ॥

दीर्घाज्जसि, इचि च परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यात् । विश्वपौ । विश्वपाः । हे विश्वपाः । विश्वपाम् । विश्वपौ ।

[2]सुडनपुंसकस्य । १ । १ । ४३ ॥

स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥

[3]स्वादिष्वसर्वनामस्थाने । १ । ४ । १७ ॥

कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसञ्ज्ञं स्यात् ॥

[4]यचि भम् । १ । ४ । १८ ॥

यकारादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यात् ।

---

जराशब्दः, किन्तु जरशब्दोऽत आह—एकदेशेति । एकदेशेन विकृतं = विकारमापन्नमन्यवन्न भवतीत्यर्थः । अत एव छिन्नपुच्छेऽपि शुनि श्वत्वव्यवहारो भवत्येव । प्रकृते च 'गोस्त्रियो' रिति ह्रस्वेन विकृतमपि जरेति जराशब्दतया गृह्यते एवेति जरशब्दस्य जरसादेशो भवतीत्याशयः । पक्षे = जरसादेशाऽभावपक्षे । हलादौ = भ्यामादौ च । विश्वं पातीति—विश्वपाः = विष्णुः, शिवश्च ।

सुडिति । प्रथमैकवचनमारभ्य औटष्टकारपर्यन्तं सुट् प्रत्याहारः, नतु सुडागम-

---

१ दीर्घ से जस् और इच् परे रहते 'प्रथमयोः पूर्वसवर्णः' इससूत्रसे दीर्घ नहीं हो ।

२ स्वादि पांच वचनों की सर्वनामस्थान संज्ञा हो, नपुंसकलिङ्ग को छोड़कर ।

३ 'सु' को आदि लेकर, 'कप्'प्रत्यय पर्यन्त जो सर्वनामस्थानभिन्न प्रत्यय, वे परे रहते पूर्व की पदसंज्ञा हो । ४ 'सु' को आदि लेकर, कप्प्रत्यय पर्यन्त जो सर्वनामस्थानभिन्न यकारादि और अजादि प्रत्यय, वे परे रहते पूर्व की भसंज्ञा हो ।

[1]आ कडारादेका सञ्ज्ञा । १ । ४ । १ ॥

इत ऊर्ध्वं 'कडाराः कर्मधारये' इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया । या पराऽनवकाशा च ॥

[2]आतो धातोः । ६ । ४ । १४० ॥

आकारान्तो यो धातुस्तदन्तस्य भस्याऽङ्गस्य लोपः स्यात् । अलोऽन्त्यस्य । विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् ? । हाहान् ॥

हरिः । हरी ।

[3]जसि च । ७ । ३ । १०९ ॥

ह्रस्वान्तस्याऽङ्गस्य गुणः स्याज्जसि परे । हरयः ॥

[4]ह्रस्वस्य गुणः । ७ । ३ । १०८ ॥

ह्रस्वस्य गुणः स्यात्सम्बुद्धौ । हे हरे । हरिम् । हरी । हरीन् ।

[5]शेषो घ्यसखि । १ । ४ । ७ ॥

'शेष' इति स्पष्टार्थम् । अनदीसंज्ञौ ह्रस्वौ याविदुतौ, तदन्तं

---

स्याऽत्र ग्रहणम्, 'सर्वनामस्थाने चाऽसम्बुद्धा' वित्यादावसम्बुद्धाविति पर्युदाससामर्थ्यात् । शङ्खध्माः = शङ्खवादकः । हाहाः = गन्धर्वविशेषः । 'हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसा' मित्यमरः ।

'ह्रस्वस्य गुण' इत्यनुवर्त्तते, अङ्गस्येति चाधिकृतं, विशेषणेन तदन्तविधिस्तदाह—ह्रस्वान्तस्येति । 'सम्बुद्धौ चे' त्यतः सम्बुद्धाविति वर्त्तते । तदाह—सम्बुद्धाविति । स्पष्टार्थमिति । 'आ कडारादेका सञ्ज्ञे' त्येकसञ्ज्ञाऽ-

---

१ प्रथमाध्याय के चतुर्थ पाद के प्रारम्भ ( १-४-१ ) से लेकर 'कडाराः कर्मधारये' ( २-२-३८ ) इस सूत्र तक एक की एक ही संज्ञा हो ( एक की दो संज्ञा नहीं हो )।

२ अकारान्त जो धातु, तदन्त जो भसञ्ज्ञक अङ्ग, उसका लोप हो ।

३ ह्रस्वान्त अङ्ग को गुण हो, जस् परे रहते । ४ ह्रस्वान्त अङ्ग को गुण हो, सम्बुद्धि परे रहते । ५ नदी सञ्ज्ञक से भिन्न जो ह्रस्व इकार और उकार, तदन्त जो सखिभिन्न अङ्ग, उसकी घिसञ्ज्ञा हो ।

सखिवर्जं घिसञ्ज्ञं स्यात् ॥

[1]आङो नाऽस्त्रियाम् । ७ । ३ । १२० ॥

घेः परस्याऽऽङो ना स्यादस्त्रियाम् । आङिति टासञ्ज्ञा प्राचाम् । हरिणा । हरिभ्याम् । हरिभिः ।

[2]घेर्ङिति । ७ । ३ । १११ ॥

घिसंज्ञकस्य ङिति सुपि गुणः स्यात् । हरये । हरिभ्याम् । हरिभ्यः ।

[3]ङसि-ङसोश्च । ६ । १ । ११० ॥

एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात् । हरेः २ । हर्योः २ । हर्योः २ । हरीणाम् ।

[4]अच्च घेः । ७ । ३ । ११९ ॥

इदुद्भ्यामुत्तरस्य ङेरौत् स्यात्, घेरन्तादेशश्चाऽकारः । हरौ । हरिषु ॥ एवं कव्यादयः ॥

[5]अनङ् सौ । ७ । १ । ९३ ॥

सख्युरङ्गस्याऽनङादेशः स्यादसम्बुद्धौ सौ ॥

---

घिकारादेवैकसञ्ज्ञायाः ( ह्रस्वे एकस्या घिसञ्ज्ञायाः ) सिद्धया शेषग्रहणं स्पष्टार्थमित्याशयः । 'अच्च घे'रित्यतो 'घे'रित्यनुवर्त्तते, तदाह–घेः परस्येति ।

'सुपि चे' त्यतः सुपी'ति, 'ह्रस्वस्य गुण' इत्यतो 'गुण' इति चानुवर्त्ततेऽत आह-सुपि गुण इति । अच्च घेः । अत्–प्रथमान्तं, च-अव्ययपदं, घेः-षष्ठयन्तम् । 'इदुद्भ्या'मिति' 'ङेरा'मित्यतो 'ङे'रिति, 'औ'दिति चानुवर्त्तते । तदाह–इदुद्भ्यामिति । 'सख्युरसम्बुद्धा'विति वर्त्तते, अङ्गस्येति चाधिकृतन्तदाह–सख्युरिति ।

---

१ घिसञ्ज्ञक से परे जो आङ् (अर्थात् टाविभक्ति), उसको 'ना' आदेश हो ।

२ घि संज्ञक को गुण हो ङित् सुप्परे रहते ।

३ एङ् से ङसिङस्सम्बन्धी अकार परे रहते पूर्व पर के स्थान पूर्वरूप एकादेश हो । ४ इकार और उकार से परे जो ङि, उसको औत् आदेश हो, और घिसञ्ज्ञक को अकार अन्तादेश भी हो । ५ सखिरूप जो अङ्ग, उसको अनङ् आदेश हो, सम्बुद्धिभिन्न सु परे रहते ।

[1] अलोऽन्त्यात्पूर्व उपधा । १ । १ । ६५ ॥

अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् ॥

[2] सर्वनामस्थाने चाऽसम्बुद्धौ । ६ । ४ । ८ ॥

नान्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने ॥

[3] अपृक्त एकाल् प्रत्ययः । १ । २ । ४१ ॥

एकाल्प्रत्ययो यः, सोऽपृक्तसञ्ज्ञः स्यात् ॥

[4] हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् । ६ । १ । ६८ ॥

हलन्तात्परं, दीर्घौ यौ ङ्यापौ तदन्ताच्च परं, सु-ति-सीत्येतदपृक्तं हल्लुप्यते ॥

[5] न लोपः प्रातिपदिकाऽन्तस्य । ८ । २ । ७ ॥

प्रातिपदिकसंज्ञकं यत्पदं, तदन्तस्य नस्य लोपः स्यात् । सखा ॥

[6] सख्युरसम्बुद्धौ । ७ । १ । ९२ ॥

सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ॥

अचो ञ्णिति । ७ । २ । ११५ ॥

---

अन्त्यालः पूर्वोऽपि साजात्याद्वर्ण एव ग्राह्य इत्याह-वर्ण इति । 'ढूलोपे' इत्यतो 'दीर्घ' इति, 'नोपधाया' इति च वर्त्तते, 'अङ्गस्ये' त्यधिकृतं, विशेषणेन तदन्तविधिस्तदाह—नान्तस्येति ।

न—लुप्तषष्ठ्यन्तं, लोपः—प्रथमान्तं । प्रातिपदिकेति—लुप्तषष्ठ्यन्तम् ।

---

१ अन्त्य अल् से जो पूर्व वर्ण, उसकी उपधा संज्ञा हो । २ नान्त की उपधा को दीर्घ हो, सम्बुद्धिभिन्न सर्वनामस्थान परे रहते । ३ एक अल् रूप जो प्रत्यय, उसकी अपृक्तसंज्ञा हो । ४ हलन्त से परे जो सु ति सि का अपृक्त हल्, उसका लोप हो । और दीर्घ जो ङी आप्, उनसे परे जो सु का अपृक्त हल्, उसका लोप हो । ५ प्रातिपदिकसञ्ज्ञक जो पद, उसके अन्त का जो नकार, उसका लोप हो । ६ सखिरूप अङ्ग से परे जो सम्बुद्धिभिन्न सर्वनामस्थान, वह णिद्वत् हो ।

[1]अजन्ताऽङ्गस्य वृद्धिः स्याञ्ञिति, णिति च प्रत्यये परे । सखायौ । सखायः । हे सखे । सखायम । सखायौ । सखीन् । सख्या । सख्ये ।

[2]ख्यत्यात्परस्य । ६ । १ । ११२ ॥

खि-तिशब्दाभ्यां, खी-तीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसि-ङसोरत उत्स्यात् । सख्युः २ ॥

[3]औत् । ७ । ३ । ११८ ॥

इदुद्भ्याम् परस्य ङेरौत्स्यात् । सख्यौ । शेषं हरिवत् ॥

[4]पतिः समास एव । १ । ४ । ८ ॥

पतिशब्दः समास एव घिसञ्ज्ञः स्यात् । [ पत्ये ] । पत्युः २ । पत्यौ । शेषं हरिवत् । समासे तु-भूपतिना । भूपतये ॥ कतिशब्दो नित्यं बहुवचनान्तः ॥

[5]बहु-गण-वतु-डति संख्या । १ । १ । २३ ॥

एते संख्यासञ्ज्ञाः स्यु ।

[6]डति च । १ । १ । २५ ॥

डत्यन्ता संख्या षट्सञ्ज्ञा स्यात् ॥

---

अन्तस्य—षष्ठ्यन्तम् । 'मृजेर्वृद्धि' रित्यतो 'वृद्धि' रिति वर्तते, 'अङ्गस्ये'त्यधिकृतं विशेष्यं, विशेषणेन तदन्तविधिरत आह—अजन्ताङ्गस्येति । 'ख्ये'तिकृतयणादेशयोः' खि-खी-शब्दयोरनुकरणम्, एवं 'त्ये'त्यपि कृतयणादेशयोः—ति—ती—शब्दयोर्ग्रहणम्, अकारस्तूच्चारणार्थस्तदाह—कृतयणेति ।

'शेषो घ्यसखी'त्यतो 'घी'त्यनुवर्त्ततेऽतः आह—घिसञ्ज्ञ इति । 'ष्णान्ता षडि'त्यतः 'षडि'ति, 'बहुगणे' त्यतः 'सङ्ख्ये'ति चानुवर्त्तते, विशेषणेन तदन्तविधिस्तदाह-डत्यन्ता इति ।

---

१ अजन्त अङ्ग को वृद्धि हो, ञित् णित्प्रत्यय परे रहते । २ कृतयणादेश जो ह्रस्व खि शब्द, और ह्रस्व ति शब्द, एवं कृतयणादेश जो दीर्घ खीशब्द, और दीर्घ ती शब्द, उनसे परे जो ङसि ङस् का अकार, उसको उकार आदेश हो । ३ इकार उकार से परे जो ङि उसको औत् आदेश हो । ४ पति शब्द की समास में ही घिसञ्ज्ञा हो । ५ बहु शब्द और गण शब्द तथा वतुप्रत्ययान्त और डतिप्रत्ययान्त इनकी संख्या संज्ञा हो । ६ डतिप्रत्ययान्त जो संख्यावाचक शब्द उसको षट्सञ्ज्ञा हो ।

[1]षड्भ्यो लुक् । ७ । १ । २२ ॥

षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् ॥

[2]प्रत्ययस्य लुक्-श्लु-लुपः । १ । १ । ६१ ॥

लुक्-श्लु-लुप्शब्दैः कृतं प्रत्ययाऽदर्शनं क्रमात्तत्तत्संज्ञं स्यात् ॥

[3]प्रत्ययलोपे प्रत्ययलक्षणम् । १ । १ । ६२ ॥

प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् । इति 'जसि चे'ति गुणे प्राप्ते ॥

[4]न लुमताङ्गस्य । १ । १ । ६३ ॥

लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कति २ । कतिभिः । कतिभ्यः २ । कतीनाम् । कतिषु ।

युष्मदस्मत्षट्संज्ञ-कास्त्रिषु सरूपाः ॥ त्रिशब्दो नित्यं बहुवचनान्तः ।

त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः २ ॥

[5]त्रेस्त्रयः । ७ । १ । ५३ ॥

त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् । त्रिषु । गौणत्वेऽपि । प्रियत्रयाणाम् ॥

---

'प्रत्ययलोपे प्रत्ययलक्षण'मित्यनुवर्त्तते, तदाह—लुमतेति । लुक्, श्लु, लुप्—एते—लुमन्तः । युष्मदिति युष्मच्छब्दः, अस्मच्छब्दः षट्सञ्ज्ञकाः—षान्ताः, नान्ताः सङ्ख्यावाचकाः पञ्चादयः, डत्यन्तः—कतिशब्दश्च,—एते त्रिषु=त्रिष्वपि लिङ्गेषु, सरूपाः=तुल्यरूपा एव भवन्तीत्यर्थः । त्वं पुमान्, त्वं स्त्री, त्वं कुलम् । पञ्च पुरुषाः, पञ्च नद्यः, पञ्च सूत्राणि । षट् पुरुषाः, षट् स्त्रियः, षड्ढलानि । कति घटाः, कति स्त्रियः, कति वस्त्राणि—इत्येवं त्रिष्वपि लिङ्गेषु समानमेवैषां रूपं भवतीत्याशयः ।

---

१ षट्संज्ञक से परे जो जस् और शस् उनका लुक् हो । २ 'लुक्' 'श्लु' 'लुप्' इन शब्दों से किया गया जो प्रत्यय का अदर्शन, वह क्रम से 'लुक्' 'श्लु' 'लुप्' संज्ञक हो । ३ प्रत्यय का लोप होने पर भी तदाश्रित कार्य हो ।

४ लुमान् ( लुक् श्लु लुप् ) शब्दों से जहाँ लोप हुआ हो, वहाँ तन्निमित्तक अङ्गकार्य नहीं हो । ५ त्रिशब्द को त्रय आदेश हो, आम् परे रहते ।

[1]त्यदादीनामः । ७ । २ । १०२ ॥

एषामकारोऽन्तादेशः स्याद्विभक्तौ । [2]द्विपर्यन्तानामेवेष्टिः । द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ॥

पाति लोकमिति पपीः—सूर्यः ॥

[3]दीर्घाज्जसि च ६ । १ । १०५ ॥

दीर्घाज्जसि, इचि च परे न पूर्वसवर्णदीर्घः । पप्यौ २ । पप्यः । हे पपीः । पपीम् । पपीन् । पप्या । पपीभ्याम् ३ । पपीभिः । पप्ये । पपीभ्यः २ । पप्यः २ । पप्योः । दीर्घत्वान्न नुट् । पप्याम् । ङौ तु सवर्णदीर्घः-पपी । पप्योः । पपीषु । एवं वातप्रम्यादयः ॥

बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ॥

[4]यू स्त्र्याख्यौ नदी । १ । ४ । ३ ॥

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । ❀[5]प्रथमलिङ्गग्रहणं च । पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः ॥

---

गौणत्वेऽपीति । 'आमि सर्वनाम्नः' इत्यतः 'आमी' त्यनुवर्त्तते, तदाह—आमीति । गौणमुख्यन्यायस्तु पदकार्यें एव वर्त्तते, न प्रातिपदिककार्यें इति भावः । द्विपर्यन्तानामेव—त्यच्छब्दमारभ्य द्विशब्दान्तानां शब्दानामेव, इष्टिः=भाष्यकृता त्यदादित्वमिष्यते इत्यर्थः । दीर्घत्वात्=ह्रस्वान्तत्वाऽभावान्नद्यन्तत्वाऽभावाच्च—न नुडित्यर्थः ।

वातप्रमीः=मृगविशेषः । 'वातप्रमीर्वातमृगः' इत्यमरः ।

यू स्त्र्येति । यू-प्रथमान्तम्, स्त्र्याख्यौ-प्रथमान्तं, नदी प्रथमान्तम् ।

पूर्वमिति । वृत्तेः प्राक् नित्यस्त्रीलिङ्गोऽपि यः शब्दो वृत्तावुपसर्जनतया-

---

१ त्यदादि को अकार अन्तादेश हो, विभक्ति परे रहते । २ त्यद् से लेकर द्विशब्द पर्यन्त जो आठ शब्द हैं, वे ही त्यदादिपद से भाष्यकार को अभीष्ट हैं । ३ दीर्घ से जस् और इच् परे रहते पूर्वसवर्णदीर्घ नहीं हो । ४ ईदन्त और ऊदन्त जो नित्य स्त्रीलिङ्ग, उनकी नदी संज्ञा हो । ५ जो शब्द पहिले नित्यस्त्रीलिङ्ग हो, परन्तु उपसर्जन होने से कदाचित् अन्यलिङ्गभी हो जाए तो भी वह नदीसंज्ञक हो ।

[१]अम्बार्थनद्योर्ह्रस्वः । ७ । ३ । १०७ ॥

अम्बार्थानां, नद्यन्तानाञ्च ह्रस्वः स्यात्सम्बुद्धौ । हे बहुश्रेयसि ॥

[२]आण्नद्याः । ७ । ३ । ११२ ॥

नद्यन्तात्परेषां ङिताम् आडागमः स्यात् ॥

[३]आटश्च । ६ । १ । ९० ॥

आटोऽचि परे वृद्धिरेकादेशः स्यात् । बहुश्रेयस्यै । बहुश्रेयस्याः २ । बहुश्रेयसीनाम् ।

[४]ङेराम्नद्याम्नीभ्यः । ७ । ३ । ११६ ॥

नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेराम् स्यात् । बहुश्रेयस्याम् । शेषं पपीवत् ॥ अङ्यन्तत्वान्न सुलोपः । अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् ॥ प्रधीः ।

---

ङ्यलिङ्गः सोऽपि नदीसञ्ज्ञो भवतीति वार्त्तिकार्थः ।

अम्बार्थनद्योः—षष्ठ्यन्तम्, ह्रस्वः–प्रथमान्तम् । 'सम्बुद्धौ च' इत्यतः सम्बुद्धाविति वर्त्तते, तदाह—सम्बुद्धाविति ।

आट्—प्रथमान्तम्, नद्याः—पञ्चम्यन्तम् । 'घेर्ङिती' इत्यतो 'ङिती'ति वर्त्तते, तच्च षष्ठ्या विपरिणम्यते, अङ्गस्येत्यधिकृतं, तच्च पञ्चम्या विपरिणम्यते, विशेषणेन च तदन्तविधिः, तदाह—नद्यन्तादिति । लक्ष्मीरिति । 'लक्षेर्मुट् चे'ति ईप्रत्ययान्तोऽयं लक्ष्मीशब्दः । तथा च ङ्यन्तत्वाऽभावाद्धल्ङ्याब्भ्य इति सुलोपो न भवतीत्यर्थः । प्रकृष्टं ध्यायतीति-प्रधीः=श्रेष्ठध्यानवान् ।

---

१ अम्बार्थक शब्द और नदीसञ्ज्ञक शब्द को ह्रस्व हो, सम्बुद्धि परे रहते ।
२ नद्यन्त से परे जो ङिद्वचन, उनको आट् का आगम हो ।
३ आट् से अच् परे रहते पूर्व पर के स्थान में वृद्धिरूप एकादेश हो ।
४ नद्यन्त, आबन्त और नीशब्द से परे जो ङि, उसको आम् आदेश हो ।

[1]अचि श्नुधातुभ्रुवां य्वोरियङुवङौ । ६ । ४ । ७७ ॥

श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाऽङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । इति प्राप्ते ॥

[2]एरनेकाचोऽसंयोगपूर्वस्य । ६ । ४ । ८२ ॥

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये । प्रध्यौ । प्रध्यः । प्रध्यम् । प्रध्यौ । प्रध्यः । प्रध्यि । शेषं पपीवत् । एवं ग्रामणीः । ङौ तु-ग्रामण्याम् । अनेकाचः किम् ? । नीः । नियौ । नियः । अमि, शसि च परत्वादियङ् । नियम् । ङेराम्-नियाम् । असंयोगपूर्वस्य किम् ? । सुश्रियौ । यवक्रियौ ॥

[3]गतिश्च । १ । ४ । ६० ॥

प्रादयः क्रियायोगे गतिसञ्ज्ञाः स्युः । ❀[4]गति-कारकेतरपूर्वपदस्य यण् नेष्यते । शुद्धधियौ ॥

---

अचीति । अचि-सप्तम्यन्तं, श्नुधातुभ्रुवां-षष्ठ्यन्तम्, य्वोः-षष्ठ्यन्तम्, इयङुवङौ—प्रथमान्तम् । एरिति । एः—षष्ठ्यन्तम्, अनेकाचः-षष्ठ्यन्तम् । असंयोगपूर्वस्य-षष्ठ्यन्तम् । ग्रामणीः = ग्रामाधिपः, नापितोऽपि । ( ठाकुर व नाई ) । नीः=नेता ।

शुद्धा धीर्यस्यासौ शुद्धधीरित्यत्र प्रातिपदिकः शुद्धशब्दो गतिकारकेतरं इति 'एरनेकाच' इति यण्न भवति, तेन अचिश्नुधात्विति इयङि-शुद्धधियौ, शुद्धधिय इत्यादि रूपाणि भवन्ति ।

---

१ श्नुप्रत्ययान्त जो धातु, और इवर्ण और उवर्णान्त जो धातु, और भ्रू यह जो अङ्ग, इनको इयङ् और उवङ् आदेश हो, अजादि प्रत्यय परे रहते ।

२ धातु का अवयव जो संयोग, वह पूर्व में नहीं है जिसके ऐसा जो इवर्ण, तदन्त जो धातु, तदन्त जो अनेकाच् अङ्ग, उसको यण् हो, अजादि प्रत्यय परे रहते ।

३ प्र आदि की क्रिया के योग में गति संज्ञा हो ।

४ गति और कारक से इतर पूर्वपद में जिसके हो उसको यण् नहीं हो ।

[1]न भूसुधियोः । ६ । ४ । ८५ ॥

एतयोरचि सुपि यण्न । सुधियौ । सुधिय इत्यादि ॥ सुखमिच्छतीति सुखीः । सुतमिच्छतीति-सुतीः । सुख्यौ २ । सुत्यौ २ । सुख्युः २ । सुत्युः २ । शेषं प्रधीवत् ॥ शम्भुर्हरिवत् । एवं भान्वादयः ॥

[2]तृज्वत्क्रोष्टुः । ७ । १ । ९५ ॥

क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते, असम्बुद्धौ सर्वनामस्थाने परे । क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः ।

[3]ऋतो ङि-सर्वनामस्थानयोः । ७ । ३ । ११० ॥

ऋतोऽङ्गस्य गुणः स्यान्ङौ, सर्वनामस्थाने च परे । इति प्राप्ते ।

[4]ऋदुशनस्पुरुदंसोऽनेहसां च । ७ । १ । ९४ ॥

ऋदन्तानामुशनसादीनां चाऽनङ् स्यादसम्बुद्धौ सौ ।

अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् । ६ । ४ । ११ ॥

---

सुतमिच्छतीति–सुतीः । अत्र दीर्घ–खी–ती-शब्दतया, कृतयणादेशतया च ङसिङसोरतः 'ख्यत्यात्परस्ये'ति उत्वे–सुख्युरिति, सुत्युरिति च रूपम् ।

तृज्वत्—अव्ययपदम् । क्रोष्टुः–प्रथमान्तम् । 'इतो'दित्यतः 'सर्वनामस्थाने' इति, 'सख्युरसम्बुद्धा'वित्यतः—असम्बुद्धाविति चानुवर्त्तते, तदाह—असम्बुद्धाविति । 'ह्रस्वस्य गुणः' इत्यतो गुणपदमनुवर्त्याऽर्थमाह—गुण इति ।

---

१ भू और सुधी शब्द को यण् नहीं हो, अजादि सुप्प्रत्यय परे रहते ।

२ क्रोष्टु शब्द को तृज्वद्भाव हो । अर्थात्–क्रोष्टु शब्द के स्थान में क्रोष्टृ शब्द आदेश हो, सम्बुद्धिभिन्न सर्वनाम परे रहते ।

३ ऋदन्त अङ्ग को गुण हो, ङि और सर्वनामस्थान परे रहते ।

४ ऋदन्त और उशनसादि को अनङ् आदेश हो, सम्बुद्धिभिन्न सु परे रहते ।

[1]अबादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । क्रोष्टून् ।

[2]विभाषा तृतीयादिष्वचि । ७ । १ । ९७ ॥

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा । क्रोष्ट्रे ।

[3]ऋत उत् । ६ । १ । १११ ॥

ऋतो ङसिङसोरति उकार एकादेशः स्यात् । रपरः ।

[4]रात्सस्य । ८ । २ । २४ ॥

रेफात्संयोगान्तस्य सस्यैव लोपो, नाऽन्यस्य । रस्य विसर्गः । क्रोष्टुः २ । क्रोष्ट्रोः २ । [5]नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन । क्रोष्टूनाम् । क्रोष्टरि । पक्षे, हलादौ च शम्भुवत् ॥ हूहूः । हूह्वौ । हूह्वः । हूहूम्-इत्यादि । अतिचमूशब्दे तु नदीकार्यं विशेषः । हे अतिचमु ! । अतिचम्वै । अतिचम्वाः २ । अतिचमूनाम् ॥ खलपूः ॥

---

विभाषा—अव्ययपदं, तृतीयादिषु—सप्तम्यन्तम् । अचि—सप्तम्यन्तम् । 'एङः पदान्ता'दित्यतः—'अती'ति, 'ङसिङसोश्चे'त्यतो 'ङसिङसो'रिति, 'एकः पूर्वपरयो'रिति चानुवर्त्याह—ऋत इति । रपरः='उरण्रपर' इत्यनेन रपरत्वमिति भावः । विसर्गः='खरवसानयो'रित्यनेनेति भावः । हूहूः—गन्धर्वविशेषः । चमूं=सेनाम्—अतिक्रान्तः—अतिचमूः=हस्ती, शूरो वा ।

नदीकार्यमिति । 'प्रथमलिङ्गग्रहणञ्चे'त्युक्त्याऽतिचमूशब्दे नदीसञ्ज्ञायाः प्रवृत्त्या हे अतिचमु इत्यत्राऽम्बार्थनद्योरिति ह्रस्वः । 'अतिचम्वै' 'अतिचम्वा'

---

१ अबादि की उपधा को दीर्घ हो, सम्बुद्धिभिन्न सर्वनामस्थान परे रहते । २ क्रोष्टु शब्द को तृज्वद्भाव हो, विकल्प करके, अजादि तृतीयादि विभक्ति परे रहते । ३ ऋदन्त अङ्ग से ङसि ङस् सम्बन्धी अकार परे रहते पूर्व पर के स्थान में उकार रूप एकादेश हो । ४ रेफ से परे यदि संयोगान्त का लोप हो तो सकार का ही हो, अन्य ( वर्ण ) का नहीं हो । ५ नुम्, और अच् परे रहते रभाव, और तृज्वद्भाव-इनकी अपेक्षा से पूर्वविप्रतिषेध से नुट् ही होता है ।

[1]ओः सुपि । ६ । ४ । ८३ ॥

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्याऽनेकाचोऽङ्गस्य यण् स्यादचि सुपि । खलप्वौ । खलप्वः ॥ एवं सुल्वादयः ॥ स्वभूः । स्वभुवौ । स्वभुवः ॥ वर्षाभूः ।

[2]वर्षाभ्वश्च । ६ । ४ । ८४ ।

अस्योवर्णस्य यण् स्यादचि सुपि । वर्षाभ्वावित्यादि ॥ दृन्भूः । *[3]दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः । दृन्भ्वौ । दृन्भ्व इत्यादि । एवं करभूः ॥ धाता । हे धातः । धातारौ । धातारः । *[4]ऋवर्णान्नस्य णत्वं वाच्यम् । धातॄणाम् ॥ एवं नप्त्रादयः । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेनेह न—पिता । पितरौ । पितरः । पितरम् । शेषं धातृवत् ॥ एवं जामात्रादयः ॥ ना । नरौ ।

---

इत्यादौ 'आण्नद्याः' इत्याडागमः, 'अतिचमूना'मित्यत्र 'ह्रस्वनद्यापः' इति नुट् च सिद्ध्यतीत्यर्थः । खलं पुनातीति खलपूः=धान्यशोधकः ।

ओः सुपीति । अचिश्नुधात्वित्यतोऽचीति, धात्विति चानुवर्त्तते, 'एरनेकाच' इत्यतोऽसंयोगपूर्वस्येति, 'अनेकाच' इति चानुवर्त्तते । ओः—षष्ठयन्तं, सुपि—सप्तम्यन्तम् । सुष्ठु लुनातीति सुलूः=शोभनलवनकर्त्ता नापितः, कृषीवलश्च । स्वभूः=ब्रह्मा ।

वर्षाभूः=दर्दुरः । 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमा'निति यादवकृतो वैजयन्तीकोशः ।

नियमार्थमिति । 'उणादिनिष्पन्नानां तृन्तृच्प्रत्ययान्तानां सञ्ज्ञाशब्दानां चेदुपधादीर्घस्तर्हि नप्त्रादीनामेव, नान्येषा'मिति च नियमाकारः । एवञ्च पित्रा-

---

१ धातु का अवयव संयोग पूर्व में नहीं है जिसके, ऐसा जो उवर्ण, तदन्त जो धातु, तदन्त जो अनेकाच् अङ्ग, उसको यण् हो, अजादि सुप् परे रहते ।

२ वर्षाभूशब्दावयव उवर्ण के स्थान में यण् आदेश हो, अजादि सुप् परे रहते । ३ दृन्करपुनःपूर्वक जो भूधातु, उसके उवर्ण को यण् हो, अजादि सुप्परे रहते । ४ ऋवर्ण से परे नकार को णत्व ( णकार ) हो ।

[1]नृ च । ६ । ४ । ६ ॥

'नृ' इत्यस्य नामि वा दीर्घः स्यात् । नृणाम् । नृणाम् ॥

[2]गोतो णित् । ७ । १ । ९० ॥

ओकाराद्विहितं सर्वनामस्थानं णिद्वत्स्यात् । गौः । गावौ । गावः ॥

[3]औतोऽम्शसोः । ६ । १ । ९३ ॥

ओकारादम्शसोरचि परे आकार एकादेशः स्यात् । गाम् । गावौ । गाः । गवा । गवे । गोः २ । इत्यादि ॥

[4]रायो हलि । ७ । २ । ८५ ॥

रैशब्दस्याऽऽकारोऽन्तादेशः स्याद्धलि विभक्तौ । राः । रायौ । रायः । राभ्यामित्यादि ॥ ग्लौः । ग्लावौ । ग्लावः । ग्लावम् । ग्लावौ । ग्लावः । ग्लौभ्यामित्यादि ॥

इत्यजन्ताः पुँल्लिङ्गाः ॥

---

दिशब्दानां नप्त्रादिभिन्नतया नानेन दीर्घः इत्याशयः । नृ च । नृ—लुप्तषष्ठ्यन्तं, च—अव्ययपदम् । इत्यस्य = नृशब्दस्य । 'गोत' इति सूत्रे गकारोऽविवक्षित इत्याशयेनाह—ओकारादिति । गोतः—पञ्चम्यन्तं । णित्—प्रथमान्तम् । 'इतोऽत्सर्वनामस्थाने' इत्यतः 'सर्वनामस्थाने' इत्यनुवर्त्तते । रायः । रायः—षष्ठ्यन्तं, हलि—सप्तम्यन्तम् । राः—धनम् । ग्लौः—चन्द्रः ।

---

१ 'नृ' शब्द को दीर्घ हो, विकल्प करके, नाम् परे रहते ।

२ ओकार से विहित जो सर्वनामस्थान वह णिद्वत् हो ।

३ ओकार से अम् और शस् सम्बन्धी अच् परे रहते पूर्व पर के स्थान आकार एकादेश हो ।

४ 'रै' शब्द को आकार अन्तादेश हो, हलादि विभक्ति परे रहते ।

# अथाजन्तस्त्रीलिंगप्रकरणम् ।

रमा ॥

[1]औङ आपः । ७ । १ । १८ ॥

आबन्तादङ्गात्परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे । रमाः ॥

[2]सम्बुद्धौ च । ७ । ३ । १०६ ॥

आप एकारः स्यात्सम्बुद्धौ । 'एङ्ह्रस्वा'दिति सम्बुद्धिलोपः । हे रमे । हे रमे । हे रमाः । रमाम् । रमे । रमाः ॥

[3]आङि चाऽऽपः । ७ । ३ । १०५ ॥

आङि, ओसि च परे आबन्तस्याऽङ्गस्य एकारः स्यात् । रमया । रमाभ्याम् । रमाभिः ।

---

रमेति । 'रमते' विष्णुना सह इति रमा—लक्ष्मीः । रमतेः पचाद्यचि टाप् । केचित्तु—रमयतीति रमा । ण्यन्ताद्रमधातोः पचाद्यच् । अमन्तत्वेन मित्त्वान्मितां ह्रस्व इति ह्रस्वः । णिलोपः । अजाद्यतष्टाबिति टाबित्याहुः । आबन्तत्वेन, लिङ्गविशिष्टपरिभषया वा स्वादयः । हल्ङ्यादिलोपः । 'बहुवचने झल्ये'-दित्यत 'ए'-दिति, 'आङि चाप' इत्यत 'आप' इति चानुवर्त्तते । तदाह—आप एकार इति । आबन्तस्येत्यर्थः । अलोऽन्त्यपरिभाषया चाऽन्त्याकारस्यैकारः ।

एङ् ह्रस्वादितीति । हल्ङ्यादिलोपस्तु न, परत्वात्प्रतिपदोक्तत्वाच्च 'सम्बुद्धौ चे'त्येत्वे कृते आरूपस्य आपोऽभावेन न, तदप्राप्तेः, एवञ्च एङ्ह्रस्वादिति सूत्रेणैवाऽत्र सम्बुद्धिलोप इति भावः ।

---

१ आबन्त अङ्ग से परे जो औङ् ( औकार विभक्ति ), उसको शी आदेश हो ।

२ आप् को ( आबन्त अङ्ग को ) एकार हो, सम्बुद्धि परे रहते ।

३ आबन्त अङ्ग को एकार हो, आङ् ( टाविभक्ति ) और ओस् परे रहते ।

## [1]याडापः । ७ । ३ । ११३ ॥

आपः परस्य ङिद्वचनस्य याडागमः स्यात् । वृद्धिः । रमायै । रमाभ्याम् ३ । रमाभ्यः २ । रमायाः २ । रमयोः २ । रमाणाम् । रमायाम् । रमासु । एवं दुर्गाऽम्बिकादयः ॥

## [2]सर्वनाम्नः स्याड्ढ्रस्वश्च । ७ । ३ । ११४ ॥

आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादापश्च ह्रस्वः । सर्वस्यै । सर्वस्याः२ । सर्वासाम् । सर्वस्याम् । शेषं रमावत् । एवं विश्वाऽऽदय आबन्ताः ॥

## [3]विभाषा दिक्समासे बहुव्रीहौ । १ । १ । २८ ॥

अत्र सर्वनामता वा स्यात् । उत्तरपूर्वस्यै । उत्तरपूर्वायै । 'तीयस्ये' ति वा सर्वनामसंज्ञा । द्वितीयस्यै । द्वितीयायै ॥ एवं तृतीया ॥

'अम्बार्थे'ति ह्रस्वः । हे अम्ब । हे अक्क । हे अल्ल ।

---

रमायै इति । याटि रमा या + ए इति स्थिते 'वृद्धिरेची' त्यनेन वृद्धिरित्यर्थः । आटश्चेति वृद्धिस्तु न, याटष्टकारस्य समुदायानुबन्धतया-प्रकृते याटि आटोऽभावात् । एवं 'सर्वस्यै' इत्यादावपि वृद्धिरेचीत्येव वृद्धिर्न तु आटश्चेतीत्यवधेयम् । एवञ्च 'रमाया' इत्यादिष्वपि 'अकः सवर्णे' इति दीर्घः । सर्वासामिति । आबन्तस्य सर्वादिगणे पाठाऽभावेऽपि एकादेशस्य पूर्वान्तवत्त्वेन ग्रहणात्सर्वासामित्यत्र 'आमि सर्वनाम्न' इति सुट् । अत्र = दिक्समासे । उत्तरस्याः, पूर्वस्याश्च दिशोर्यन्तरालं दिक् सा–उत्तरपूर्वा । 'दिङ्नामान्यन्तराले' इति बहुव्रीहिः ।

ह्रस्व इति । अम्बाऽक्काऽल्लादीनां मातृवाचितयाऽम्बार्थेति ह्रस्व इत्यर्थः ।

---

१ आप् (आबन्त अङ्ग ) से परे जो ङिद्वचन, उसको स्याट् का आगम हो ।

२ आबन्त सर्वनाम से परे जो ङिद्वचन, उसको स्याट् का आगम हो, और आप् को ह्रस्व भी हो ।

३ दिक्समास जो बहुव्रीहि उसकी सर्वनामसंज्ञा विकल्प करके हो ।

जरा । जरसौ । जरे इत्यादि । पक्षे, हलादौ च रमावत् ॥
गोपाः-विश्वपावत् ॥ [ मतिः । शसि– ] । मतीः । मत्या ॥

[1]ङिति ह्रस्वश्च । १ । ४ । ६ ॥

इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ, ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो, ङिति परे । मत्यै । मतये । मत्याः । मत्याः । मतेः । मतेः ॥

[2]इदुद्भ्याम् । ७ । ३ । ११७ ॥

---

जरा, जरसौ—जरे, जरसः—जराः—प्रथमा । जरसं–जरां, जरसौ–जरे, जरसः–जराः–द्वितीया । जरसा–जरया, जराभ्यां, जराभिः—तृतीया । जरसे–जरायै, जराभ्यां, जराभ्यः–चतुर्थी । जरसः–जरायाः, जराभ्यां, जराभ्यः—पञ्चमी । जरसः–जरायाः, जरसोः–जरयोः, जरसां–जराणां–षष्ठी । जरसि—जरायां, जरसोः–जरयोः, जरासु—सप्तमी । इति जराशब्दस्य रूपाणि ।

गाः—पातीति गोपाः—गोपालिका, गोपी । गोपाः, गोपौ, गोपाः । गोपां, गोपौ, गोपः । गोपा, गोपाभ्यां, गोपाभिः । गोपे, गोपाभ्यां, गोपाभ्यः । गोपः, गोपाभ्यां, गोपाभ्यः । गोपः, गोपोः, गोपाम् । गोपि, गोपोः, गोपासु । हे गोपाः, गोपौ, गोपाः । इति 'गोपा' शब्दस्य रूपाणि । मतीरिति । 'तस्माच्छसो न' इत्यत 'पुंसी' त्युक्तेः स्त्रीत्वान्नत्वाऽभावः । एवम्–'आङो नाऽस्त्रिया' मित्यत्र 'अस्त्रिया'-मित्युक्तरेत्र नाभावो नेत्यवधेयम् । इदुद्भ्यामिति । नदीसञ्ज्ञापक्षे-मति + ङि इत्यत्र 'ङेराम्नद्याम्नीभ्यः' इत्यपेक्षया परत्वात् 'औ' दिति ङेरौत्वे प्राप्ते, तत्प्रबाध्य आम्विधायकं सूत्रमुपन्यस्यति—इदुद्भ्यामिति । निरवकाशतया औदिति सूत्रमिदं प्रबाधते इत्याशयः । एतदभावे तु दीर्घेकारान्ते नदीगौर्यादौ चरितार्थ-

---

१ इयङ् उवङ् का स्थानी, स्त्रीशब्दावयव ईकार से भिन्न, नित्यस्त्रीलिङ्ग जो दीर्घ ईकार, ऊकार, उनकी नदीसञ्ज्ञा हो, विकल्प से, ङिद्वचन परे रहते । और स्त्रीवाची जो ह्रस्व इकार, उकार उनकी भी नदीसंज्ञा हो, विकल्प करके, ङिद्वचन परे रहते ।

२ नदीसंज्ञक जो इकार, उकार, उनसे परे जो ङि, उसको आम् आदेश हो ।

नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात्। सत्याम्। मतौ। शेषं हरिवत्। एवं बुद्ध्यादयः॥

[1]त्रि-चतुरोः स्त्रियां तिसृ-चतसृ। ७। २। ९९॥

स्त्रीलिङ्गयोरेतयोरेतावादेशौ स्तो, विभक्तौ॥

[2]अचि र ऋतः। ७। २। १००॥

'तिसृ' 'चतसृ' एतयोर्ऋकारस्य रेफादेशः स्यादचि। गुणदीर्घोत्वानामपवादः। तिस्रः। तिस्रः। तिसृभिः। तिसृभ्यः। तिसृभ्यः। आमि नुट्।

[3]न तिसृ-चतसृ। ६। ४। ४॥

एतयोर्नामि दीर्घो न स्यात्। तिसृणाम्। तिसृषु॥

---

स्य ङेरामित्यस्य; 'सख्यौ' 'पत्यौ' इत्यादौ चरितार्थस्य औदित्यस्य च, मति-ङि इत्यत्र युगपत्प्राप्तौ, तुल्यबलविरोधेन परत्वादौदिति औदादेश एव प्रवर्त्तेत। एवञ्च आम्विधायकमिदं सूत्रमिहोपन्यस्तमिति भावः। एवञ्च—'ङेरामित्येव सिद्धे इदुद्भ्यामिति किमर्थ'मिति नाशङ्कनीयम्। औदित्यस्य बाधनार्थं तत्सत्त्वात्।

त्रिचतुरोः—षष्ठ्यन्तं। स्त्रियां—सप्तम्यन्तं, तिसृचतसृ—लुप्तप्रथमान्तम्। अचि—सप्तम्यन्तं, रः—प्रथमान्तम्, ऋतः—षष्ठ्यन्तम्। 'त्रिचतुरो' रित्यतः—'तिसृचतसृ' इत्यनुवर्त्तते, तच्च षष्ठ्या विपरिणम्यते, तदाह—एतयोरिति।

गुणेति। 'तिस्रस्तिष्ठन्ती'त्यत्र प्रथमान्ते 'ऋतो ङि—'इति प्राप्तस्य गुणस्य रत्वमपवादः। 'तिस्रः पश्ये'त्यत्र द्वितीयान्ते च 'प्रथमयोः—'इति पूर्वसवर्णदीर्घस्य रत्वमपवादः। 'प्रियतिस्र आगत' इत्यत्र च पञ्चम्यां, 'प्रियतिस्रः स्व' मित्यत्र षष्ठ्यां च 'ऋत उ'दिति—उत्त्वस्यायं रेफादेशविधिरपवादो, 'मद्विषये प्राप्तं सर्वं बाध्यते'

---

१ स्त्रीलिङ्ग जो त्रि और चतुर् शब्द, उनको क्रम से तिसृ और चतसृ ये आदेश हों, विभक्ति परे रहते।

२ 'तिसृ' और 'चतसृ' के ऋकार को रेफ आदेश हो, अच्परे रहते।

३ तिसृ और चतसृ शब्द को दीर्घ नहीं हो, नाम् परे रहते।

द्वे । द्वे । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ॥

गौरी । गौर्यौ । गौर्यः । हे गौरि । गौर्यै-इत्यादि । एवं नद्यादयः ।

लक्ष्मीः । शेषं गौरीवत् । एवं तरी-तन्त्र्यादयः ॥

स्त्री । हे स्त्रि ! ॥

[1]स्त्रियाः । ६ । ४ । ७९ ॥

स्त्रीशब्दस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ । स्त्रियः ॥

[2]वाऽम्शसोः । ६ । ४ । ८० ॥

अमि, शसि च स्त्रिया इयङ् वा स्यात्। स्त्रियम्-स्त्रीम् । स्त्रियः-स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः २। परत्वान्नुट् । स्त्रीणाम् । स्त्रियाम् । स्त्रियोः । स्त्रीषु ॥

श्रीः । श्रियौ । श्रियः ॥

[3]नेयङुवङ्स्थानावस्त्री । १ । ४ । ४ ॥

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो, न तु स्त्री । हे श्रीः । श्रियै-श्रिये । श्रियाः २ । श्रियः २ ॥

---

इति बाध्यसामान्यचिन्ताश्रयणादिति विवेकः । द्वे इति । द्वि + औ इत्यवस्थायां त्यदाद्यत्वे, टापि, दीर्घे, औङः श्यादेशे, गुणे च 'द्वे' इति सिद्धम् । अत्र विभक्तिसन्निपातकृतमपि त्यदाद्यत्वं टापो निमित्तं, 'न यासयो'रिति निर्देशेन टापि सन्निपातपरिभाषाया अनित्यत्वादप्रवृत्तेः । तरी—नौका । तन्त्री = वीणा । आदिपदेन अवीः (= मेषी), स्तरी ( = धूमः ) । अत्र हि 'अवितॄस्तृतन्त्रिभ्य ईः' इत्युणादि-

---

१ स्त्रीशब्द को इयङ् आदेश हो, अजादि प्रत्यय परे रहते ।

२ स्त्रीशब्द को इयङ् आदेश हो, विकल्प करके, अम्, शस् परे रहते ।

३ इयङ् और उवङ् का स्थानी, नित्यस्त्रीलिङ्ग जो दीर्घ ईकार और ऊकार, उनकी नदीसंज्ञा नहीं हो, स्त्रीशब्द को छोड़कर ( अर्थात् स्त्री शब्द के ईकार की तो नदीसंज्ञा होती ही है )।

[1]वाऽऽमि । १ । ४ । ५ ॥

इयङ्‌उवङ्‌स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो, न तु स्त्री ॥ श्रीणाम्—श्रियाम् । श्रियै—श्रियाम् ॥ धेनुर्मतिवत् ॥

[2]स्त्रियाञ्च । ७ । १ । ९६ ॥

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ॥

[3]ऋन्नेभ्यो ङीप् । ४ । १ । ५ ॥

ऋदन्तेभ्यो, नान्तेभ्यश्च स्त्रियां ङीप् स्यात् । क्रोष्ट्री—गौरीवत् । भ्रूः—श्रीवत् । स्वयम्भूः—पुंवत् ॥

[4]न षट्-स्वस्रादिभ्यः । ४ । १ । १० ॥

षट्सञ्ज्ञकेभ्यः, स्वस्रादिभ्यश्च ङीप्टापौ न स्तः ।

स्वसा, तिस्रश्चतस्रश्च, ननान्दा, दुहिता तथा ।
याता, मातेति सप्तैते स्वस्रादय उदाहृताः ॥

स्वसा । स्वसारौ ॥ माता—पितृवत् । शसि—मातॄः । द्यौर्गोवत् ॥ राः—पुंवत् । नौर्ग्लौवत् ॥

इत्यजन्ताः स्त्रीलिङ्गाः ॥

---

पठितेकारप्रत्ययान्ततयाऽङ्यन्तत्वान्न सुलोप इत्याशयः । क्रोष्ट्री—जम्बुकी । भ्रूः = नेत्रलोमपङ्क्तिः । स्वयम्भूः—मूलप्रकृतिर्माया ।

स्वसा—भगिनी । ननान्दा—पत्युः स्वसा । ( ननन्द ) । 'ननान्दा तु स्वसा पत्यु' रित्यमरः । दुहिता = पुत्री । याता = देवरभार्या, पतिज्येष्ठभार्या

---

१ इयङ् और उवङ् का स्थानी नित्य स्त्रीलिङ्ग जो दीर्घ ईकार, ऊकार, उनकी नदी संज्ञा हो, विकल्प करके, आम् परे रहते, स्त्रीशब्द को छोड़कर ।

२ स्त्रीवाची जो क्रोष्टु शब्द, वह तृजन्त की तरह रूप को प्राप्त हो ।

३ ऋदन्त और नान्त से ङीप् प्रत्यय हो, स्त्रीत्व द्योत्य हो तो ।

४ षट् संज्ञक और स्वस्रादि से ङीप् और टाप् नहीं हों ।

# अथाजन्तनपुंसकलिंगप्रकरणम् ।

[1]अतोऽम् । ७ । १ । २४ ॥

अतोऽङ्गात् क्लीबात्स्वमोरम् स्यात् । अमि पूर्वः । ज्ञानम् । 'एङ्ह्रस्वा'दिति हल्मात्रलोपः । हे ज्ञान ! ॥

[2]नपुंसकाच्च । ७ । १ । १९ ॥

क्लीबात्परस्यौङः शी स्यात् । भसंज्ञायाम् ॥

[3]यस्येति च । ६ । ४ । १४८ ॥

---

च । ( देवरानी, जिठानी ) । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्'—इत्यमरः । द्यौः = आकाशः । राः = धनम् । पुंल्लिङ्गस्यापि रैशब्दस्य स्त्रीत्वं क्षीरस्वाम्यादिभिरभ्युपेतमिति च ध्येयम् ।

❀ इत्यजन्ताः स्त्रीलिङ्गाः ❀

अतोऽमिति । 'अत' इति पञ्चमी । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते, तस्य अत इति विशेषणं, ततस्तदन्तविधिः । एवञ्च अदन्तादङ्गादित्यर्थः । अमोऽम्विधानं तु 'स्वमोर्नपुंसका'दितिप्राप्तस्य लुको बाधनार्थम् । हे ज्ञानेति । हे ज्ञान सु इति स्थिते सम्बुद्धिलोपात्परत्वादमादेशे कृते, 'अमि पूर्वः' इति पूर्वरूपे च, तस्यान्तवद्भावाज्ज्ञानेत्यस्य ह्रस्वान्ताङ्गतया, ततः परस्य सम्बुद्ध्यवयवस्य हल्मात्रस्य मकारस्य एङ्ह्रस्वादिति लोप इत्यर्थः । एङ्ह्रस्वादित्यस्य हि अङ्गात्परा या सम्बुद्धिरिति नार्थः, किन्तु एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परो यः सम्बुद्ध्यवयवो हल्स लुप्यते इत्येवार्थ इत्याशयः ।

भसञ्ज्ञायामिति । 'सुडनपुंसकस्ये'त्युक्तेर्नपुंसके औङः सर्वनामस्थानसञ्ज्ञाया अभावेन तस्मिन्परतो ज्ञानेत्यस्य 'यचि भ'मिति भसञ्ज्ञायामित्यर्थः ।

---

१ अदन्त क्लीब अङ्ग से परे जो 'सु' और 'अम्' उनको 'अम्' आदेश हो ।
२ क्लीब अङ्ग से परे जो 'औङ्' (औकारविभक्ति) उसको 'शी' आदेश हो ।
३ भसञ्ज्ञक जो इवर्ण और अवर्ण, उनका लोप हो, ईकार और तद्धित परे रहते ।

ईकारे, तद्धिते च परे भस्येवर्णाऽवर्णयोर्लोपः स्यात् । इत्यकारलोपे प्राप्ते।
*[1]औङः श्यां प्रतिषेधो वाच्यः । ज्ञाने ॥

[2]जश्शसोः शिः । ७ । १ । २० ॥

क्लीबादनयोः शिः स्यात् ॥

[3]शि सर्वनामस्थानम् । १ । १ । ४२ ॥

'शि' इत्येतदुक्तसंज्ञं स्यात् ॥

[4]नपुंसकस्य झलचः । ७ । १ । ७२ ॥

झलन्तस्याऽजन्तस्य च क्लीबस्य नुम् स्यात्, सर्वनामस्थाने ॥

[5]मिदचोऽन्त्यात्परः । १ । १ । ४७ ॥

अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् । उपधादीर्घः । ज्ञानानि । पुनस्तद्वत् । शेषं पुंवत् । एवं धन-वन-फलादयः ॥

---

अल्लोपे ( अकारलोपे ) प्राप्ते = ज्ञानेत्यकारस्य लोपे प्राप्ते । औङ इति । औङ् स्थानिकशीविभक्तौ परतो 'यस्येति चे'ति लोपस्य प्रतिषेधो वक्तव्य इत्यर्थः । श्यामिति च विभक्त्यपेक्षया स्त्रीलिङ्गनिर्देशः । जश्शसोः शिः । अत्र जसा साहचर्यात्सुबेव शस् गृह्यते, तेन 'कुण्डशो ददाती'त्यत्र तद्धिते शसि न श्यादेशः ।
उपधादीर्घ इति । 'सर्वनामस्थाने चाऽसम्बुद्धा'विति दीर्घ इत्यर्थः । तद्वत्= प्रथमावदेव द्वितीयाया अपि रूपाणीत्यर्थः । पुंवत् = रामशब्दवदित्यर्थः ।

---

१ औङ्स्थानिक शी परे रहते 'यस्येति च' यह लोप नहीं हो ।

२ क्लीब अङ्ग से परे जो जस् और शस् उनको शि आदेश हो ।

३ 'शि' इसकी सर्वनामस्थान संज्ञा हो ।

४ झलन्त और अजन्त जो क्लीब अङ्ग, उसको नुम् का आगम हो, सर्वनामस्थान परे रहते ।

५ अचों के मध्य में जो अन्त्य अच्, उससे परे और उसी ( अन्त्य अच् ) का अन्त्य अवयव मित् हो ।

[1]अद्ड्डतरादिभ्यः पञ्चभ्यः । ७ । १ । २५ ॥

एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात् ॥

[2]टेः । ६ । ४ । १४३ ॥

डिति भस्य टेर्लोपः स्यात् । कतरत्, कतरद् । कतरे । कतराणि । हे कतरत् ! । शेषं पुंवत् ॥ एवं कतमत् । इतरत् । अन्यत् । अन्यतरत् । अन्यतमस्य त्वन्यतममित्येव । ❀[3]एकतरात्प्रतिषेधो वक्तव्यः❀ । एकतरम् ।

[4]ह्रस्वो नपुंसके प्रातिपदिकस्य । १ । २ । ४७ ॥

अजन्तस्येत्येव । [ क्लीबे प्रातिपदिकस्याऽजन्तस्य ह्रस्वः स्यात् ] । श्रीपं-ज्ञानवत् ॥

---

अद्डिति । अत्र जिघृक्षितादेशस्वरूपप्रतिपादनाय दस्य ष्टुत्वं न कृतम् । अत्र-कतरत् कतरद्, कतरे, कतराणि । पुनरपि-कतरत्-द्, कतरे, कतराणि । कतरेण, कतराभ्यां, कतरैः । कतरस्मै, कतराभ्यां, कतरेभ्यः । कतरस्मात्-द्, कतराभ्यां, कतरेभ्यः । कतरस्य, कतरयोः, कतरेषाम् । कतरस्मिन्, कतरयोः, कतरेषु । हे कतरत्-द्, हे कतरे, हे कतराणि—रूपाणि । इत्येवेति । अन्यतम-शब्दस्याऽव्युत्पन्नप्रातिपदिकतया डतमप्रत्ययान्तत्वाऽभावान्नानेनाऽद्डादेश इति अतोऽमित्यमादेश एवेत्यर्थः । यद्यपि—अन्यतरशब्दोऽपि अव्युत्पन्न एव, तथापि तस्य डतरादिगणे पाठादेव ततः स्वमोरद्डादेशः । अन्यतमशब्दस्य तु न गणे पाठ इति न तत्राऽदेश इत्यवधेयम । अतएव अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्त्तेते इत्यभियुक्ताः ।

एकतरशब्दस्याऽपि डतरप्रत्ययान्ततयाऽद्डादेशस्य प्रवृत्त्यापत्तिरत आह—एकतरादिति । 'भोः सूत्रकार ! भवता-एकतरशब्दात्परयोः स्वमोरद्डादेशो न भवती'त्यपि वक्तव्यमित्यर्थः ।

---

१ नपुंसकलिङ्ग में वर्त्तमान जो डतरादि पांच, उनसे परे जो सु और अम्, उनको अद्ड् आदेश हो । २ डित्प्रत्यय परे रहते भसंज्ञक की टि का लोप हो ।

३ एकतरशब्द से परे सु और अम् को अद्ड् आदेश नहीं हो ।

४ क्लीबलिङ्ग में अजन्त प्रातिपदिक को ह्रस्व हो ।

[1]स्वमोर्नपुंसकात् । ७ । १ । २३ ॥

क्लीबादङ्गात्परयोः स्वमोर्लुक् स्यात् । वारि ॥

[2]इकोऽचि विभक्तौ । ७ । १ । ७३ ॥

इगन्तस्य क्लीबस्य नुम् स्यादचि विभक्तौ । वारिणी । वारीणि । 'न लुमते' त्यस्याऽनित्यत्वात्पक्षे सम्बुद्धिनिमित्तो गुणः । हे वारे । हे वारि । 'आङो ना' । वारिणा । 'घेर्ङिती'ति गुणे प्राप्ते-❀[3]वृद्धयौत्वतृज्वद्भाव-

गुण इति । 'ह्रस्वस्य गुण' इति गुणोऽपि पक्षे भवतीत्यर्थः । अतएव 'इकोऽची'ति सूत्रे 'हे त्रपो' इति, 'एङ्ह्रस्वा' दितिसूत्रे च 'हे त्रपु' इति च भाष्ये रूपद्वयमुपन्यस्तम् । ननु सम्बुद्धेर्लुका लुप्तत्वान्नलुमतेति प्रत्ययलक्षणनिषेधाच्च कथं गुण इति चेन्न; 'इकोऽचि विभक्तौ' इत्यत्राऽज्ग्रहणाज्ज्ञापकान्नलुमतेत्यस्याऽनित्यत्वात् । तथाहि—अज्ग्रहणाऽभावेऽपि हलादिषु ( भ्यामादिषु ) सत्यपि नुमि 'नलोपः प्रातिपदिकान्तस्ये'ति नलोपसम्भवाद्दोषाऽभावेन अचीति तत्र व्यर्थं, न च सम्बुद्धौ नुम्व्यावृत्त्यर्थमज्ग्रहणं, तत्र नुमि सति 'न ङिसम्बुद्ध्यो'रिति निषेधान्नलोपस्याऽप्रवृत्तेरिति वाच्यं, सम्बुद्धेर्लुका लुप्तत्वेन 'न लुमते'ति निषेधात्प्रत्ययलक्षणाऽप्रवृत्त्या विभक्तिपरत्वाऽभावेन तत्र नुमः प्राप्तेरेवाऽभावात् । एवञ्चाऽज्ग्रहणं व्यर्थं सन्न लुमतेति निषेधोऽनित्य इति ज्ञापयति । तथा च लुका लुप्तेऽपि प्रत्ययलक्षणप्रवृत्त्या सम्बुद्धिपरतया प्राप्तं नुमं वारयितुमज्ग्रहणं तत्र सफलमिति भावः । तदेवमनित्यत्वपक्षे सम्बुद्धिनिमित्तो गुणः, अनित्यत्वाऽभावे तु सम्बुद्धिपरत्वाऽभावान्न गुण इति,—हे वारे, हे वारीति रूपद्वयं भवतीत्यवधेयम् ।

वृद्ध्यौत्त्वेति । वृद्ध्यादीनां क्रमेण—गावौ, हरौ, क्रोष्ट्रा, हरये इत्यत्रावकाशः । नुमः—'वारीणि' इत्यत्रावकाशः । 'अतिसखीनि'—इत्यत्र परत्वान्नुमं बाधित्वा—'सख्युरसम्बुद्धा'विति णित्त्वाद् वृद्धिः प्राप्ता । वारिणि'इत्यत्र ङेः—'अच्च

---

१ क्लीब अङ्ग से परे जो और सु और अम् उनका लुक् हो ।

२ इगन्त जो क्लीब अङ्ग, उसको नुम् का आगम हो, अजादि विभक्ति परे रहते ।

३ वृद्धि, औत्व, तृज्वद्भाव और गुण—इनकी अपेक्षा से पूर्वविप्रतिषेध से नुम् ही होता है ।

गुणेभ्यो नुम् पूर्वविप्रतिषेधेन । वारिणे । वारिणः २ । वारिणोः २ । 'नुमचिरे' ति नुट् । वारीणाम् । वारिणि । हलादौ हरिवत् ॥

[1]अस्थि-दधि-सक्थ्य-क्ष्णामनङुदात्तः । ७ । १ । ७५ ॥

एषामनङ् स्याट्टादावचि, स चोदात्तः ॥

[2]अल्लोपोऽनः । ६ । ४ । १३४ ॥

अङ्गाऽवयवोऽसर्वनामस्थान-यजादिस्वादि-परो योऽन्, तस्याऽकारस्य लोपः स्यात् । दध्ना । दध्ने । दध्नः २ । दध्नोः २ । दध्नाम् ॥

[3]विभाषा ङि-श्योः । ६ । ४ । १३६ ॥

अङ्गावयवोऽसर्वनामस्थान-यजादिस्वादि-परो योऽन्, तस्याऽकारस्य लोपो वा स्यान्ङि-श्योः परयोः । दध्नि,दधनि । शेषं वारिवत् ॥ एवमस्थि-सक्थ्य-क्षि ॥ सुधि । सुधिनी । सुधीनि । हे सुधे, हे सुधि ॥

---

घे'रित्यौत्वं परत्वात्प्राप्तम्, 'प्रियक्रोष्टूनि' इत्यत्र जश्शसोः परत्वान्नुमं बाधित्वा तृज्वत्त्वं प्राप्तं, 'वारिणे' इत्यत्र परत्वान्नुमं बाधित्वा 'घेर्ङिती'ति गुणः प्राप्तः । तत्र पूर्वविप्रतिषेधान्नुमेव भवति, न परा अपि वृद्ध्यादय इत्यर्थः ।

सक्थि=ऊरुः । 'सक्थि क्लीबे नुमानूरुः' इत्यमरः । सुधीति । सुष्ठु ध्यायतीति, शोभना धीर्यस्येति वा-सुधि कुलम् । 'सुधिनी' इत्यत्र नुमा परत्वा-दियङ् बाध्यते । शोभनज्ञानवत्त्वं, शोभनध्यानवत्त्वं वा प्रवृत्तिनिमित्तं पुंसि, क्लीवे च तुल्यमिति; तुल्ये प्रवृत्तिनिमित्ते भाषितपुंस्कतयाऽत्र पुवद्भावप्रवृत्तिः । एवं-सुलुशब्देऽपि शोभनलवनकर्त्तृत्वं प्रवृत्तिनिमित्तं, तच्च पुंसि, क्लीवे च समानमिति तुल्ये प्रवृत्तिनिमित्ते भाषितपुंस्कत्वात्पुंवद्भावस्तत्र प्रवर्त्तते । एवं धातृशब्देऽपि

---

१ अस्थ्यादि को ( उदात्त ) अनङ् आदेश हो, टादि अच् परे रहते ।

२ अङ्ग का अवयव, सर्वनामस्थानभिन्न-यजादिस्वादि-परक जो अन्, उसके अकार का लोप हो । ३ अङ्ग का अवयव, सर्वनामस्थानभिन्न-यजादिस्वादि परक जो अन्, उसके अकार का लोप हो, विकल्प करके, ङि और शी परे रहते ।

[1]तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य । ७ । १ । ७४ ॥

प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा स्याट्टादावचि । सुधिया, सुधिनेत्यादि ॥ मधु । मधुनी । मधूनि । हे मधो, हे मधु ! ॥ सुलु । सुलुनी । सुलूनि । सुल्वा, सुलुनेत्यादि ॥

धातृ । धातृणी । धातॄणि । हे धातः, हे धातृ ! । धात्रा, धातृणा । धातॄणाम् । एवं ज्ञात्रादयः ॥

[2]एच इग्घ्रस्वादेशे । १ । १ । ४८ ॥

आदिश्यमानेषु ह्रस्वेषु (मध्ये) एच इगेव स्यात् । प्रद्यु । प्रद्युनी । प्रद्यूनि ।

धारणकर्तृत्वस्य प्रवृत्तिनिमित्तस्य पुंसि क्लीबे च तुल्यतया पुंवद्भावः । सुधिनेत्यादीति । सुधि, सुधिनी, सुधीनि । पुनरपि–सुधि, सुधिनी, सुधीनि । सुधिया–सुधिना, सुधीभ्यां, सुधीभिः । सुधिये—सुधिने, सुधीभ्यां, सुधीभ्यः । सुधियः–सुधिनः, सुधीभ्यां, सुधीभ्यः । सुधियः—सुधिनः, सुधियोः—सुधिनोः, सुधियां–सुधीनाम् । सुधियि–सुधिनि, सुधियोः–सुधिनोः, सुधिषु । हे सुधे—हे सुधि, हे सुधिनी, हे सुधीनि । इति रूपाणि । एवं सुलुशब्दे–सुलु, सुलुनी, सुलूनि । पुनरपि–सुलु, सुलुनी सुलूनी । सुल्वा–सुलुना । सुल्वे–सुलुने । सुल्वः– सुलुनः २ । सुल्वोः–सुलुनोः २ । सुल्वां–सुलूनाम् । सुल्वि–सुलुनि । हे सुलो–हे सुलु । इत्यादि रूपाणि । धातृशब्दे–धात्रा–धातृणा । धात्रे–धातृणे । धातुः–धातृणः २ । धात्रोः–धातृणोः २ । धातॄणाम् । धातरि—धातृणि । हे धातः–हे धातृ-इत्यादि रूपाणि । प्रद्यु इति । प्रद्युशब्दे तु न पुंवद्भावः, 'प्रकृष्टाऽऽकाशवत्त्वरूपस्य प्रवृत्तिनिमित्तस्यैक्ये-यदिगन्तं प्रद्यु, तस्य भाषितपुंस्कत्वाऽभावात्, यच्च भाषितपुंस्कं–'प्रद्यो' इति, तस्येगन्तत्वाऽभावात् । एवं प्ररिशब्दादावपि न । मधुशब्देऽपि न

१ प्रवृत्तिनिमित्त के एक होते हुए जो भाषितपुंस्क इगन्त क्लीब शब्दस्वरूप, उसको पुंवद्भाव हो, विकल्प करके, टादि अचपरे रहते ।

२ आदिश्यमान ह्रस्वों के मध्य में—एच् के स्थान में इक् ही ह्रस्व हो । ( अर्थात्-एच् के स्थान में जहाँ ह्रस्व करना हो, वहाँ इक् ही ह्रस्व होता है ) ।

प्रद्युनेत्यादि ॥ प्ररि। प्ररिणी। प्ररीणि। प्ररिणा। एकदेशविकृतमनन्यवत्। प्रराभ्याम्। प्ररीणाम्।

सुनु। सुनुनी। सुनूनि। सुनुनेत्यादि।

॥ इत्यजन्तनपुंसकलिङ्गप्रकरणम् ॥

---

# अथ हलन्तपुँल्लिंगप्रकरणम्।

[1]हो ढः। ८। २। ३१॥

हस्य ढः स्याज्झलि, पदान्ते च। लिट्, लिड्। लिहौ। लिहः। लिहा। लिड्भ्याम्। लिट्त्सु, लिट्सु॥

[2]दादेर्धातोर्घः। ८। २। ३२॥

---

पुंवत्त्वं, तस्य भाषितपुंस्कत्वेऽपि प्रवृत्तिनिमित्तभेदात्। तत्र पुंसि चैत्रत्वं, क्लीबे पुष्परसादित्वञ्च प्रवृत्तिनिमित्तमिति विवेकः। 'मधुर्वसन्ते चैत्रे च' 'मधु मद्ये पुष्परसे' इत्यभिधानात्। प्रराति। प्रकृष्टो रा यस्मिन् कुले तत्प्ररि कुलम्॥ सुष्ठु नौर्यस्मिन् कुले, जले वा तत्—सुनु। अत्रापि पूर्ववत् न पुंवद्भावः।

॥ इत्यजन्ता नपुंसकलिङ्गाः॥

लिडिति। लेढीति लिट्। लिह् आस्वादने। क्विप्। हल्ङ्यादिलोपे पदान्तत्वाड्ढत्वं। 'वावसाने' इति चर्त्वविकल्पः। लिट्स्विति। ढस्य जश्त्वेन डः, तस्य 'खरि चे'ति चर्त्वेन टः। तस्याऽसिद्धत्वाच्चयो द्वितीया इति टस्य ठो न। सस्य ष्टुत्वन्तु न, 'न पदान्ताट्टोरना' मिति तन्निषेधात्।

लिट्त्स्विति। ढस्य जश्त्वेन डकारे, चर्त्वस्याऽसिद्धत्वात्पूर्वं 'डः सि' इति धुटि, चर्त्वेन धस्य तकारः, डस्य टकारश्च।

दादेरिति धातोरित्यावर्त्तते, तत्रैकमतिरिच्यमानमुपदेशकालिकं दादिं लक्षणया

---

१ हकार के स्थान में ढकार आदेश हो, झलपरे रहते और पदान्त में।

२ उपदेश में जो दादि धातु, तदवयव जो हकार, उसको घकार आदेश हो, झलपरे रहते और पदान्त में।

उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि, पदान्ते च ॥

[1]एकाचो बशो भष् झषन्तस्य स्ध्वोः । ८ । २ । ३७ ॥

धात्ववयवस्यैकाचो झषन्तस्य बशो भष् स्यात्–से, ध्वे, पदान्ते च। धुक्-धुग्। दुहौ। दुहः। धुग्भ्याम्। धुक्षु।

[2]वा द्रुह-मुह-ष्णुह-ष्णिहाम् । ८ । २ । ३३ ॥

एषां हस्य वा घः स्याज्झलि, पदान्ते च। ध्रुक्-ध्रुग्, ध्रुट्-ध्रुड्। द्रुहौ। द्रुहः। ध्रुग्भ्याम्-ध्रुड्भ्याम्। ध्रुक्षु, ध्रुट्सु, ध्रुट्त्सु। एवं-मुक्-मुग्-मुट्-मुड् इत्यादि।

[3]धात्वादेः षः सः । ६ । १ । ६४ ॥

धातोरादेः षस्य सः स्यात्। स्नुक्–स्नुग्, स्नुट्–स्नुड्। एवं–स्निक–स्निग्, स्निट्–स्निड् (इत्यादि)॥ विश्ववाट्। विश्ववाड्। विश्ववाहौ। विश्ववाहः। विश्ववाहम्। विश्ववाहौ॥

[4]इग्यणः सम्प्रसारणम् । १ । १ । ४५ ॥

---

बोधयति, तदाह–उपदेशे इति। स्ध्वोर्ग्रहणसामर्थ्याज्झलीति नेह सम्बध्यते, तेन 'दुग्धे' 'दोग्धे'त्यादौ न भष्भावः। धुगिति। दुह प्रपूरणे, क्विप्। दोग्धीति धुक्=गोपालः। ध्रुगिति। 'द्रुह जिघांसायां' 'मुह वैचित्ये', 'ष्णुह उद्गिरणे' 'ष्णिह प्रीतौ'। एभ्यः क्विप्। द्रुहेर्दादित्वान्नित्यं घत्वे प्राप्ते, अन्यत्र चाऽप्राप्ते, उभयत्र विभाषेयम्।

---

१ धातु का अवयव जो एकाच् झषन्त, तदवयव जो बश्, उसके स्थान में भष्भाव हो, सकार और ध्व शब्द परे रहते, और पदान्त में।

२ द्रुह् मुह् ष्णुह् ष्णिह् इनके हकार को घकार हो, विकल्प करके, झल्परे रहते और पदान्त में।

३ धातु के आदि का जो षकार, उसको सकार आदेश हो। ४ यण् के स्थान में प्रयुज्यमान (विधीयमान) जो इक् सो सम्प्रसारणसञ्ज्ञक हो।

यणः स्थाने प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः स्यात्।

[1]वाह ऊठ्। ६। ४। १३२॥

भस्य वाहः सम्प्रसारणमूठ् स्यात्।

[2]सम्प्रसारणाच्च। ६। १। १०८॥

सम्प्रसारणादचि परे पूर्वरूपमेकादेशः स्यात्। 'एत्येधत्यूठ्स्वि'ति वृद्धिः। विश्वौहः। इत्यादि।

[3]चतुरनडुहोरामुदात्तः। ७। १। ९८॥

अनयोराम् स्यात् सर्वनामस्थाने परे [ स चोदात्तः ]।

[4]सावनडुहः। ७। १। ८२॥

अस्य नुम् स्यात् सौ परे। अनड्वान्॥

[5]अम् सम्बुद्धौ ७। १। ९९॥

चतुरनडुहोरम् स्यात् सम्बुद्धौ। हे अनड्वन्!। अनड्वाहौ। अनड्वाहः। अनडुहः। अनडुहा।

[6]वसु-स्रंसु-ध्वंस्व-नडुहां दः। ८। २। ७२॥

सान्तवस्वन्तस्य, स्रंसादेश्च दः स्यात्पदान्ते। अनडुद्भ्यामित्यादि।

---

विश्ववाडिति। विश्वं वहतीति-विश्ववाट्-विश्वम्भरः। एवं-रथवाट्। शकटवाट्। अनः=शकटं वहतीति-अनड्वान्=वृषः। 'अनसि वहेः क्विप्, अनसो डश्च'। संयोगान्तलोपस्याऽसिद्धत्वान्नलोपः प्रातिपादिकान्तेति नलोपो न।

'ससजुषो रुः' इति सूत्रात्सेत्यनुवर्त्तते, तच्च वसोरेव विशेषणं, न स्रंसुध्वंसोरव्यभिचारात्, नाप्यनडुहः, असम्भवादत आह—सान्तेति।

---

१ भसञ्ज्ञक जो वाह्, उसको सम्प्रसारणसञ्ज्ञक ऊठ् आदेश हो।

२ सम्प्रसारण से अच् परे रहते पूर्व पर के स्थान में पूर्वरूप एकादेश हो।

३ चतुर् और अनडुह् शब्द को आम् का आगम हो, सर्वनामस्थान परे रहते।

४ अनडुह् शब्द को नुम् का आगम हो, सुप्रत्यय परे रहते।

५ चतुर् और अनडुह् शब्द को अम् का आगम हो, सम्बुद्धि परे रहते।

६ सान्त जो वस्वन्त और स्रंसादि, उनको दकार अन्तादेश हो, पदान्त में।

सान्तेति किम्? । विद्वान् । पदान्तेति किम्? । स्रस्तम् । ध्वस्तम् ।

[1]सहेः साडः सः । ८ । ३ । ५६ ॥

साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात् । तुराषाट् । तुराषाड् । तुरासाहौ । तुरासाहः । तुराषाड्भ्यामित्यादि ।

[2]दिव औत् । ७ । १ । ८४ ॥

'दि'विति प्रातिपदिकस्य औत्स्यात्सौ [ परे ] । सुद्यौः । सुदिवौ ॥

[3]दिव उत् । ६ । १ । १३१ ॥

दिवोऽन्तादेश उकारः स्यात् पदान्ते । सुद्युभ्यामित्यादि ॥

चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः २ ॥

[4]षट्चतुर्भ्यश्च । ७ । १ । ५५ ॥

षट्संज्ञकेभ्यश्चतुरश्च परस्याऽऽमो नुडागमः स्यात् ॥

[5]रषाभ्यां नो णः समानपदे । ८ । ४ । १ ॥

[ एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात्समानपदे ] ।

[6]अचो रहाभ्यां द्वे । ८ । ४ । ४६ ॥

[ अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः ] । चतुर्ण्णाम् । चतुर्णाम् ॥

---

तुराषाट्—इन्द्रः । 'तुराषाण्मेघवाहनः' इत्यमरः ।

---

१ साड्रूप जो सह् धातु उसके सकार को मूर्धन्य ( षकार ) आदेश हो ।

२ 'दिव्' (यह जो) प्रातिपदिक, (उस) को औकार अन्तादेश हो, सु परे रहते ।

३ दिव् शब्द को उकार अन्तादेश हो, पदान्त में ।

४ षट्संज्ञक और चतुर् शब्दसे परे जो आम्, उसको नुट् आगम हो ।

५ एकपदस्थ जो रेफ और षकार, उनसे परे जो नकार, उसको णकार हो ।

६ अच् से परे जो रेफ और-हकार, उनसे परे जो यर्, उसको द्वित्व हो, विकल्प करके ।

[1]रोः सुपि । ८ । ३ । १६ ॥

सप्तमीबहुवचने रोरेव विसर्जनीयो, नाऽन्यरेफस्य । षत्वम् । षस्य द्वित्वे प्राप्ते—॥

[2]शरोऽचि । ८ । ४ । ४६ ॥

अचि परे शरो न द्वे स्तः । चतुर्षु ॥

[3]मो नो धातोः । ८ । २ । ६४ ॥

धातोर्मस्य नः स्यात् पदान्ते । प्रशान् ।

[4]किमः कः । ७ । २ । १०३ ॥

किमः कः स्याद्विभक्तौ । कः । कौ । के । [ कम् । कौ । कान् ] । इत्यादि । शेषं सर्ववत् ॥

[5]इदमो मः । ७ । २ । १०८ ॥

इदमो मस्य मः स्यात् सौ परे । त्यदाद्यत्वापवादः ॥

[6]इदोऽय् पुंसि । ७ । २ । १११ ॥

इदम इदोऽय् स्यात् सौ पुंसि । [ सोर्लोपः ] । अयम् । त्यदाद्यत्वे ॥

---

'खरवसानयो' रित्येव सिद्धे नियमार्थमिदमत आह—रोरेवेति । 'रोः सुप्येव विसर्ग' इति विपरीतनियमस्तु न, 'हलोऽनन्तराः संयोगः' इत्यादिनिर्देशात् ।

इदमो म' इत्यत 'इदम' इत्यनुवर्त्तते, तदाह—इदम इति । 'तदोः सः सावन-न्त्ययो' रित्यतः सावित्यनुवर्तते ।

---

१ सप्तमी बहुवचन सुप् परे रहते रु के रेफ को ही विसर्ग हो, अन्य रेफ को विसर्ग नहीं हो । २ अच् परे रहते शर् को द्वित्व नहीं हो ।

३ धातु के मकार को नकार आदेश हो, पदान्त में । ४ किम् शब्द को 'क' आदेश हो, विभक्ति परे रहते । ५ इदम् शब्द के मकार को मकार ही आदेश हो, सु परे रहते । ६ इदम् शब्द के इद् भाग को अय् आदेश हो, सु परे रहते, पुंल्लिङ्ग में ।

[1]अतो गुणे । ६ । १ । ९७ ॥

अपदान्तादतो गुणे परतः पररूपमेकादेशः स्यात् ॥

[2]दश्च । ७ । २ । १०९ ॥

इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः ॥

[3]अनाप्यकः । ७ । २ । ११२ ॥

अककारस्येदम इदोऽन् स्यादापि विभक्तौ । 'आ'बिति 'टा' इत्यारभ्य सुपः पकारेण प्रत्याहारः । अनेन ॥

[4]हलि लोपः । ७ । २ । ११३ ॥

अककारस्येदम इदो लोपः स्यादापि हलादौ ।

[5]नाऽनर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥

---

अनाप्यक इति । अन् प्रथमान्तम्, आपि—सप्तम्यन्तम् । अकः—षष्ठ्यन्तम् । आबितीति । आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः, न तु टापो ग्रहणं, विभक्ताविति विशेषणात् । नानर्थक इति । अनर्थके 'अलोऽन्त्यस्ये' ति विधिर्न प्रवर्त्तते, अभ्यासविकारं वर्जयित्वा, अभ्यासविकारे तु अनर्थकेऽप्यलोन्त्यस्येति प्रवर्त्तते एवेत्यर्थः । तेन बिभर्ति, पिपर्त्तीत्यादौ 'भृञामि'दिति, 'अर्त्तिपिपर्त्यो' रिति चेत्त्वमभ्यासावयवस्यान्त्यस्य अलो भवति, न सर्वस्याभ्यासस्येत्याहुः ।

---

१ अपदान्त ह्रस्व अकार से गुण परे रहते पूर्व पर के स्थान में पररूप एकादेश हो । २ इदम् शब्द के दकार को मकार आदेश हो, विभक्ति परे रहते ।

३ ककाररहित जो इदम् शब्द, उसके इद् भाग को अन् आदेश हो, आप् ( तृतीयादि ) विभक्ति परे रहते । ४ ककाररहित जो इदम्शब्द, उसके इद् भाग का लोप लोप हो, हलादि आप् ( तृतीयादि ) विभक्ति परे रहते ।

५ अनर्थक में अलोन्त्यविधि ('अलोन्त्यस्य' यह सूत्र) प्रवृत्त नहीं होता है, अभ्यासविकार को छोड़कर । अर्थात्–अभ्यासविकार में तो अनर्थक में भी अलोन्त्यविधि प्रवृत्त होता ही है ।

[1]आद्यन्तवदेकस्मिन् । १ । १ । २१ ॥

एकस्मिन् क्रियमाणं कार्यमादाविवाऽन्त इव स्यात् । 'सुपि चे' ति दीर्घः । आभ्याम् ॥

[2]नेदमदसोरकोः । ७ । १ । ११ ॥

अककारयोरिदमदसोर्भिस ऐस् न स्यात् । एभिः । अस्मै । [ आभ्याम् ] । एभ्यः । अस्मात् । [ आभ्याम् । एभ्यः ] । अस्य । अनयोः । एषाम् । अस्मिन् । अनयोः । एषु ॥

[3]द्वितीयाटौस्स्वेनः । २ । ४ । ३४ ॥

द्वितीयायां, टौसोश्च परत इदमेतदोरेनादेशः स्यादन्वादेशे । किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथा,-'अनेन व्याकरणमधीतमेनं छन्दोऽध्यापये' ति । 'अनयोः पवित्रं कुलमेनयोः प्रभूतं स्व'मिति । एनम् । एनौ । एनान् । एनेन । एनयोः । एनयोः ॥ राजा ।

---

द्वितीयाटौस्सु—सप्तम्यन्तम्, एनः–प्रथमान्तम् । विधातुम्=अपूर्वं बोधयितुम् । अनु=पश्चात्, आदेशः=उपादानमित्यर्थः । यथेति । अत्र अधीतव्याकरणोऽयं बाल इति बोधयितुमुपात्तस्येदम्शब्दस्य, छन्दोऽध्यापनानुज्ञाप्रदानरूपं कार्यान्तरं बोधयितुं पुनरुपादानाद् भवत्यत्राऽन्वादेशः । एवमेव—पवित्रसत्कुलप्रसूताविमाविति बोधयितुमुपात्तस्य, प्रभूतधनशालिनावपीमाविति पुनरपि च

---

१ एक ( असहाय ) में क्रियमाण जो कार्य, वह आदि और अन्त की तरह हो । २ ककाररहित जो इदम् और अदस् शब्द, उनसे परे जो भिस् उसको ऐस् आदेश नहीं हो ।

३ द्वितीया, टा और ओस् विभक्ति परे रहते इदम् और एतद् को 'एन' आदेश हो, अन्वादेश में ।

४ किसी कार्य को विधान करने के लिए जिसका पहिले उपादान किया गया हो, उसी का कार्यान्तर विधान करने को पुनः उपादान ( ग्रहण ) करना-'अन्वादेश' कहाता है ।

[1]न ङि-सम्बुद्ध्योः । ८ । २ । ८ ॥

नस्य लोपो न स्यान्ङौ, सम्बुद्धौ च ॥ हे राजन् ! । *[2]ङावुत्तरपदे प्रतिषेधो वक्तव्यः । (ब्रह्मणि निष्ठाऽस्य–) ब्रह्मनिष्ठः । राजानौ । राजानः । राज्ञः ॥

[3]नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति । ८ । २ । २ ॥

सुब्विधौ, स्वरविधौ, संज्ञाविधौ, कृति-तुग्विधौ च नलोपोऽसिद्धो, नान्यत्र–'राजाश्व' इत्यादौ ।-इत्यसिद्धत्वादात्वमेत्वमैस्त्वञ्च न । राजभ्याम् । राजभिः । राजभ्यः । राज्ञि-राजनि । राजसु ॥

यज्वा । यज्वानौ । यज्वानः ॥

[4]न संयोगाद्वमन्तात् । ६ । ४ । १३७ ॥

वकार-मकारा-ऽन्तसंयोगात्परस्याऽनोऽकारस्य लोपो न स्यात् ॥ यज्वनः । यज्वना । यज्वभ्याम् ॥ ब्रह्मणः । ब्रह्मणा ।

[5]इन्हन्पूषाऽर्यम्णां शौ । ६ । ४ । १२ ॥

---

बोधयितुं पुनरुपादानाद्भवत्यन्वादेशः । ङाविति । उत्तरपदपरके ङौ परतो 'न ङिसम्बुद्धयो'रिति नलोपप्रतिषेधो न प्रवर्त्तते, किन्तु 'नलोपः प्रातिपदिके'ति नलोपो भवत्येवेति वार्तिकार्थः ।

इत्यसिद्धत्वात्=इत्यनेन शास्त्रेण प्रकृते सुब्विधित्वेन नलोपस्याऽसिद्धतया, 'राजभ्या'मित्यत्र 'सुपि चे'ति दीर्घः, 'राजभ्य' इत्यत्र 'बहुवचने झल्ये'त्येत्वम्, 'राजभि'रित्यत्र 'अतो भिस ऐस्'इत्यैस्त्वञ्च नेत्यर्थः । विधिना-इष्टवान् इति यज्वा= सविधि कृतयागः । 'सुयजोर्ङ्वनिप्' । 'यज्वा तु विधिनेष्टवा'नित्यमरः । ब्रह्मा=

---

१ ङि और सम्बुद्धि परे रहते नकार का लोप नहीं हो ।

२ उत्तरपदपरक ङि परे रहते, 'न ङिसम्बुद्धयोः' यह नलोप का निषेध प्रवृत्त नहीं हो । अर्थात् वहाँ नलोप होता ही है । ३ सुब्विधि, स्वरविधि, संज्ञाविधि, और कृत् परक तुग् विधि-इनमें ही नलोप असिद्ध होता है–अन्यत्र नहीं ।

४ वकारान्त और मकारान्त जो संयोग, उससे परे जो अन्, उसका जो अकार, उसका लोप नहीं हो । ५ इन्, हन्, पूषन् और अर्यमन्, इनकी उपधा को 'शि' परे रहते ही दीर्घ हो, अन्यत्र नहीं हो ।

एषां शावेवोपधाया दीर्घो, नाऽन्यत्र । इति निषेधे प्राप्ते ॥

[1]सौ च । ६ । ४ । १३ ॥

इन्नादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सौ परे। वृत्रहा। हे वृत्रहन्!।

[2]एकाजुत्तरपदे णः । ८ । ४ । १२ ॥

एकाजुत्तरपदं यस्य—तस्मिन्समासे,-पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्त-नुम्-विभक्तिस्थस्य नस्य णः स्यात् । वृत्रहणौ ॥

[3]हो हन्तेर्ञ्णिन्नेषु । ७ । ३ । ५४ ॥

ञिति, णिति च प्रत्यये, नकारे च परे हन्तेर्हकारस्य कुत्वं स्यात् । वृत्रघ्नः--इत्यादि ॥ एवं शार्ङ्गिन् । यशस्विन् । अर्यमन् । पूषन् ॥

[4]मघवा बहुलम् । ६ । ४ । १२८ ॥

मघवन्शब्दस्य वा 'तृ' इत्यन्तादेशः स्यात् । ऋ इत् ।

[5]उगिदचां सर्वनामस्थानेऽधातोः । ७ । १ । ७० ॥

---

प्रजापतिर्ब्राह्मणश्च । 'सर्वनामस्थाने चाऽसम्बुद्धा'वित्येव सिद्धे नियमार्थमिदमत आह-शावेवेति । 'शावेवे'ति नियमात्सौ दीर्घस्याऽप्राप्तेराह-सौ च । वृत्रं हतवान्-वृत्रहा=इन्द्रः ।

शार्ङ्ग-शृङ्गनिर्मितं-धनुः-अस्त्यस्य-(शार्ङ्गा=माया, तद्वान् वा) शार्ङ्गी=विष्णुः। अर्यमा=आदित्यः। पूषा=सूर्यः । मघवा=इन्द्रः ।

---

१ इन्, हन्, पूषन् और अर्यमन्-इनकी उपधा को दीर्घ हो, सम्बुद्धि भिन्न सु परे रहते ।

२ एक अच् है उत्तरपद में जिसके, ऐसा जो समास, उस समास में पूर्वपद में स्थित निमित्त ( रेफ और षकार ) से परे जो प्रातिपदिकान्त, नुम् और विभक्तिस्थ नकार, उसको णकार आदेश हो, ३ ञित् और णित् प्रत्यय परे रहते, और नकार परे रहते, हन् धातु के हकार को कुत्व (घकार) हो ।

४ मघवन् शब्द को 'तृ' यह अन्तादेश हो, विकल्प करके । ५ धातुभिन्न जो उगित्, और नलोपी जो अञ्चति, उनको नुम् का आगम हो, सर्वनामस्थान परे रहते।

अथातोऽरुगितो, नलोपिनोऽञ्चतेश्च नुमागमः स्यात्सर्वनामस्थाने परे। उपधादीर्घः। मघवान्। मघवन्तौ। मघवन्तः। हे मघवन्!। मघवद्भ्याम्॥ तृत्वाऽभावे—मघवा। सुटि—राजवत्॥

¹श्व-युव-मघोनामतद्धिते ६।४।१३३॥

अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे सम्प्रसारणं स्यात्। मघोनः। मघवभ्याम्॥ एवं श्वन्। युवन् [ शब्दे वस्योत्वे कृते— ]॥

²न सम्प्रसारणे सम्प्रसारणम्। ६।१।३७॥

सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न स्यात्। इति यकारस्य नेत्वम्। अत एव ज्ञापकादन्त्यस्य यणः पूर्वं सम्प्रसारणम्। यूनः। यूना। युवभ्याम्-इत्यादि॥

अर्वा। हे अर्वन्।

³अर्वणस्त्रसावनञः। ६।४।१२७॥

नञा रहितस्याऽर्वन्नित्यस्याऽङ्गस्य 'तृ' इत्यन्तादेशः स्यान्न तु सौ। अर्वन्तौ। अर्वन्तः। अर्वद्भ्यामित्यादि॥

---

उपधादीर्घ इति। 'सर्वनामस्थाने चाऽसम्बुद्धौ' इत्यनेन दीर्घ इत्यर्थः। सुटि = सर्वनामस्थाने। राजवत् = राजञ्छब्दवद्रूपाणि बोध्यानीत्यर्थः।

श्वेति। श्वा, श्वानौ, श्वानः। श्वानं, श्वानौ, शुनः। शुना, श्वभ्यां, श्वभिः। शुने, श्वभ्यां, श्वभ्यः। शुनः, श्वभ्यां, श्वभ्यः। शुनः, शुनोः, शुनाम्। शुनि, शुनोः, श्वसु। हे श्वन्॥ एवं—युवा, युवानौ, युवानः। युवानं, युवानौ, यूनः। यूना। युवभ्यामित्यादि। अर्वा=घोटकः।

---

१ अन्नन्त और भसंज्ञक जो श्वन्, युवन् और मघवन् शब्द, इन ( के यण् ) को सम्प्रसारण हो, तद्धितभिन्न प्रत्यय परे रहते।

२ सम्प्रसारण परे रहते पूर्व यण् को सम्प्रसारण नहीं हो।

३ नञ्से रहित जो 'अर्वन्' यह अङ्ग, उसको 'तृ' ( यह ) अन्तादेश हो, परन्तु सु परे रहते यह 'तृ' आदेश नहीं हो।

[१]पथि-मथ्यृ-भुक्षामात् । ७ । १ । ८५ ॥

एषामाकारोऽन्तादेशः स्यात् सौ परे ॥

[२]इतोऽत्सर्वनामस्थाने । ७ । १ । ८६ ॥

पथ्यादेरिकारस्याऽकारः स्यात्सर्वनामस्थाने परे ॥

[३]थो न्थः । ७ । १ । ८७ ॥

पथिमथोस्थस्य न्थाऽऽदेशः स्यात्, सर्वनामस्थाने परे । पन्थाः । पन्थानौ । पन्थानः ॥

[४]भस्य टेर्लोपः । ७ । १ । ८८ ॥

भसञ्ज्ञकस्य पथ्यादेष्टेर्लोपः स्यात् । पथः । पथा । पथिभ्याम् ॥ एवं मथिन् । ऋभुक्षिन् ॥

[५]ष्णान्ता षट् । १ । १ । २४ ॥

षान्ता, नान्ता च सङ्ख्या षट्संज्ञा स्यात् । 'पञ्चन्' शब्दो नित्यं बहुवचनान्तः । पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः । पञ्चभ्यः । नुट् ।

---

पथिमथि । आ-आदिति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः ।
इतोऽत् । 'इत' इत्यत्र, 'अ'दित्यत्र च तपरकरणं स्पष्टार्थम् ।
थो न्थः । थः—षष्ठ्यन्तं, न्थः—प्रथमान्तम् । पथिमथिग्रहणमनुवर्त्तते, ऋभुक्षिग्रहणं च निवृत्तं, तत्र थकाराऽभावात् । मन्था = मन्थनदण्डः । ऋभुक्षा= इन्द्रः । पञ्चेति । पञ्चेत्यत्र जश्शसोः 'षड्भ्यो लु' गिति लुक् । नलोपः । नुडिति । 'षट्चतुर्भ्यश्चे' त्यनेन 'पञ्चाना'मित्यत्र नुडित्यर्थः ।

---

१ पथिन्, मथिन् और ऋभुक्षिन्-इनको आकार अन्तादेश हो, सु परे रहते । २ पथिन्, मथिन् और ऋभुक्षिन् शब्दों का जो इकार, उसको अकार आदेश हो, सर्वनामस्थान परे रहते । ३ पथिन् और मथिन् के थकार को 'न्थ' आदेश हो, सर्वनामस्थान परे रहते । ४ भसंज्ञक जो पथ्यादि, उनकी टि का लोप हो ।
५ षान्त और नान्त जो संख्या वाचक शब्द, उनकी षट्संज्ञा हो ।

[1]नोपधायाः । ६ । ४ । ७ ॥

नान्तस्योपधाया दीर्घः स्यान्नामि परे । (नलोपः) । पञ्चानाम् । पञ्चसु ॥

[2]अष्टन आ विभक्तौ । ७ । २ । ८४ ॥

अष्टन आत्वं वा स्याद्धलादौ विभक्तौ ॥

[3]अष्टाभ्य औश् । ७ । १ । २१ ॥

कृताऽऽकारादष्टनः परयोर्जश्शसोरौश् स्यात् । 'अष्टभ्य' इति वक्तव्ये कृताऽऽत्वनिर्देशो—जश्शसोर्विषये आत्वं ज्ञापयति । अष्टौ । अष्टौ । अष्टाभिः । अष्टाभ्यः । अष्टाभ्यः । अष्टानाम् । अष्टासु ।

आत्वाऽभावे—अष्ट, अष्ट—इत्यादि पञ्चवत् ॥

---

नोपधायाः । नेति लुप्तषष्ठ्यन्तम्, उपधायाः—षष्ठ्यन्तम् । पञ्चन्शब्दादामि 'षट्चतुर्भ्य' इति नुटि, नलोपस्याऽसिद्धत्वात् पूर्वं 'नोपधाया' इति दीर्घे, ततः—'स्वादिष्वि'ति सूत्रेण 'पञ्च'न्नित्यस्य पदत्वान्नलोपः प्रातिपदिकेति नलोपे, 'पञ्चाना'मिति सिद्धम् । अष्टभ्य इति । ननु आत्वविधायके 'अष्टन आ विभक्ता'वित्यत्र हलीत्यस्यापकर्षेण जश्शसोर्हलादित्वाऽभावादात्वाऽप्रवृत्त्या जश्शसोः परतोऽष्टञ्शब्दस्य कृताऽऽकारता कथमत आह—अष्टभ्य इतीति । 'अष्टाभ्यः औशि'त्यत्र कृताऽऽत्वस्याऽष्टाशब्दस्यानुकरणं कृत्वा, ततो भ्यसि 'अष्टाभ्य' इति रूपं, न तु 'अष्टन्'शब्दस्य लक्षणवशसम्पन्नाऽऽकारस्य तद्रूपं, तथा सति हि मात्रालाघवेन 'अष्टभ्य' इत्येव वक्तव्यं स्यात् । 'दीर्घान्तादष्टनः परा असर्वनामस्थानविभक्तिरुदात्ता' इत्यर्थके 'अष्टनो दीर्घा'दिति सूत्रे दीर्घग्रहणादात्त्वस्य वैकल्पिकत्वात् । एवञ्च 'अष्टाभ्य' इति कृतात्त्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयतीति युक्तमेवोक्तम् । अष्टानामिति । अष्टन् आमित्यत्र 'षट्चतुर्भ्यश्चे'ति नुटि, सन्निपातपरिभाषाया अनित्यत्वादष्टन आ विभक्तावित्यात्त्वमिति केचित् । परेतु नुटि

---

१ नान्त की उपधा को दीर्घ हो, नाम् परे रहते । २ अष्टन् शब्द को आत्व हो, विकल्प करके, हलादि विभक्ति परे रहते । ३ कृताऽऽकार जो अष्टन् शब्द, उससे परे जो जस् और शस्—उनको औश् आदेश हो ।

[1] ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च । ३ । २ । ५९ ॥

एभ्यः क्विन् ( स्यात् ।- ) अञ्चेः सुप्युपदे ।-युजिक्रुञ्चोः केवलयोः । -क्रुञ्चेर्नलोपाऽभावश्च निपात्यते । कनावितौ ॥

[2] कृदतिङ् । ३ । १ । ९३ ॥

अत्र=संनिहिते धात्वधिकारे,—तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ॥

[3] वेरपृक्तस्य । ६ । १ । ६७ ॥

अपृक्तस्य वस्य लोपः स्यात् ॥

[4] क्विन्प्रत्ययस्य कुः । ८ । २ । ६२ ॥

---

'नोपधायाः' इति दीर्घे, नलोपे च 'अष्टाना' मिति रूपमित्याहुः ।

'स्पृशोऽनुदके' इत्यतः 'क्वि'नित्यनुवर्त्तते, तदाह—क्विनिति । ऋतावुपपदे यजेः क्विन् । धृष्णोतेर्द्वित्वमन्तोदात्तत्वञ्च निपात्यते । सृजेः कर्मणि क्विन्, अमागमश्च निपात्यते । दिशेः कर्मणि क्विन् । उत्पूर्वात्स्निहेः क्विन्, तकारलोपः, षत्वञ्च । अञ्चेः सुप्युपपदे क्विन् । युजिक्रुञ्चोः केवलयोः क्विन्नित्याद्यलाच्चणिकमपि किञ्चित्कार्यं निपातनाल्लभ्यते इति तत्त्वम् ।

कनावितावित्ति । कस्य-'लशक्वतद्धिते' इत्यनेन, नस्य 'हलन्त्य' मित्यनेन इत्सञ्ज्ञा, ततश्च 'तस्य लोप' इति लोप इत्यर्थः । इकारस्तूच्चारणार्थ इत्यवधेयम् ।

कृदतिङ् । कृत्-प्रथमान्तम्, अतिङ्-प्रथमान्तम् । सन्निहिते—'धातो'रित्यधिकारे । तेन 'धातोः कर्मण' इत्यधिकारविहितणिजादीनां न कृत्सञ्ज्ञा । 'लोपो व्यो'रित्यतो 'लोप' इत्यनुवर्त्तते । 'वे'रिति उत्सृष्टानुबन्धनिर्देशात् क्विन्क्विबादीनां

---

१ ऋत्विग् आदि शब्द क्विन्नन्त निपातित हो । ( और अञ्चु धातु से सुबन्त उपपद रहते क्विन् हो । युजि और क्रुञ्च से केवल से क्विन् हो। क्रुञ्च धातु के नकार का लोप नहीं हो) ।

२ संनिहित जो धात्वधिकार, उसमें पठित जो तिङ्भिन्न प्रत्यय, उनकी कृत् संज्ञा हो । ३ अपृक्त (केवल) वकार का लोप हो । ४ क्विन् प्रत्यय जिससे किया गया हो, उसको कवर्ग अन्तादेश हो, पदान्त में ।

क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात् पदान्ते। अस्याऽसिद्धत्वाच्चोः कुरिति कुत्वम्। ऋत्विक्-ऋत्विग्। ऋत्विजौ। ऋत्विग्भ्याम्॥

### [1]युजेरसमासे। ७।१।७१।

युजेः सर्वनामस्थाने नुम् स्यादसमासे। सुलोपः। संयोगान्तलोपः। कुत्वेन नस्य ङः। युङ्। अनुस्वार-परसवर्णौ। युञ्जौ। युञ्जः। युग्भ्याम्॥

### [2]चोः कुः। ८।२।३०।

चवर्गस्य कवर्गः स्याज्झलि, पदान्ते च। सुयुक्-सुयुग्। सुयुजौ। सुयुग्भ्याम्॥ खन्। खञ्जौ। खन्भ्याम्।

### [3]व्रश्च-भ्रस्ज-सृज-मृज-यज-राज-भ्राज-च्छ-शां षः। ८।२।३६॥

व्रश्चादीनां सप्तानां, छ-शाऽन्तयोश्च षकारोऽन्तादेशः स्यात्, झलि,

---

ग्रहणम्। नुमिति। 'उगिदचा' मित्यतः 'सर्वनामस्थाने' इति, 'इदितो नुम्धातो' रित्यतो नुमिति चानुवर्त्तते।

कुत्वेन नस्येति। 'क्विन्प्रत्ययस्य कु'रित्यनेनेत्यर्थः। युङिति। युनक्तीनि युङ्।

युञ्जाविति। 'नश्चापदान्तस्ये' ति नुमो नस्यानुस्वारः, 'अनुस्वारस्य ययी' ति तस्य परसवर्णेन ञकारः परसवर्णस्याऽसिद्धत्वाच्च 'चोः कु'रिति कुत्वं नेत्यवधेयम्।

सुष्ठु युनक्तीति सुयुक्। सुपूर्वाद्युजेः 'सत्सूद्विषे'ति क्विपि, 'उपपदमति'-ङिति समासः। 'असमासे' इत्युक्तेरत्र 'युजेरसमासे' इति नुम्नेत्याशयः।

खन्निति। अत्र सकारस्य हल्ङ्यादिलोपः, जकारस्य संयोगान्तलोपः। ततो निमित्तस्य जकारस्याऽपायादनुस्वारपरसवर्णयोरपि निवृत्त्या नकार एव श्रूयते।

---

१ युज् ( धातु ) को नुम् का आगम हो, सर्वनामस्थान परे रहते, असमासमें, अर्थात्—समास में नुम् का आगम नहीं हो।

२ चवर्ग को कवर्ग आदेश हो, झल् परे रहते और पदान्त में।

३ व्रश्च भ्रस्ज सृज मृज यज राज भ्राज-ये सात धातु और छान्त शान्त शब्द, उनको षकार अन्तादेश हो, झल् परे रहते और पदान्त में।

पदान्ते च । जश्त्व-चर्त्वे । राट्-राड् । राजौ । राजः । राड्भ्याम् ।। एवं विभ्राट् ।। देवेट् ।। विश्वसृट् ।।

❀ [1]परौ व्रजेः षः पदान्ते । परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च, पदान्ते षत्वमपि । परिव्राट् । परिव्राड् । परिव्राजौ ।

[2]विश्वस्य वसु-राटोः । ६ । ३ । १२८ ।।

विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ, राट् शब्दे च परे । विश्वाराट्, विश्वाराड् । विश्वराजौ । विश्वाराड्भ्याम् ।।

[3]स्कोः संयोगाद्योरन्ते च । ८ । २ । २९ ।।

पदान्ते, झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यात् । भृट् । भृड् । सस्य श्चुत्वेन शः । 'झलाञ्जश् झशी'ति शस्य जः । भृज्जौ । भृड्भ्याम् ।। त्यदाद्यत्वं, पररूपत्वं च ।

[4]तदोः सः सावनन्त्ययोः । ७ । २ । १०६ ।।

---

राजते इति राट् । विशेषेण भ्राजते इति विभ्राट् । देवान् यजतीति देवेट्=देवपूजकः । विश्वं सृजतीति विश्वसृट्=ब्रह्मा ।

सूत्रे राडिति पदान्तोपलक्षणार्थं, चर्त्वमविवक्षितं, व्याख्यानादतो जशन्तेऽपि दीर्घस्तदाह—विश्वाराडिति । विश्वस्मिन् राजते इति विश्वाराट्=सूर्यः । परित्यज्य सर्वं व्रजतीति परिव्राट्=भिक्षुः । 'भिक्षुः परिव्राट् कर्मन्दी'त्यमरः ।

पदस्येत्यधिकृतं, 'झलो झली'त्यतो झलीत्यनुवर्त्तते । 'पदस्ये'ति, 'झली'ति 'अन्ते' इति च—'संयोगे' त्यस्य लुप्तषष्ठ्यन्तस्य विशेषणम् । तदाह=पदान्ते इति । भृज्जतीति भृट्=भर्जनकर्ता ।

---

१ परि उपपद रहते व्रजधातु से क्विप् हो, (और व्रज को) दीर्घ भी हो, और पदान्त में परिव्रज्को षकार अन्तादेश भी हो। २ विश्वशब्दको दीर्घ अन्तादेश हो, वसु और राट् शब्द परे रहते। ३ संयोग के आदि का जो सकार और ककार, उनका लोप हो, पदान्त में, और झल्परे रहते ।

४ त्यदादि का जो अनन्त्य तकार और दकार, उनको सकार आदेश हो, सु परे रहते ।

त्यदादीनां तकार-दकारयोरनन्त्ययोः स स्यात्सौ । स्यः । त्यौ । त्ये ॥ सः । तौ । ते ॥ यः । यौ । ये ॥ एषः । एतौ । एते ॥ अन्वादेशे तु—एनम् । एनौ । एनान् । एनेन । एनयोः २ ।

[1]ङे प्रथमयोरम् । ७ । १ । २८ ॥

युष्मदस्मद्भ्यां परस्य 'ङे' इत्येतस्य, प्रथमा-द्वितीय योश्चाऽमादेशः स्यात् ॥

[2]त्वाऽहौ सौ । ७ । २ । ९० ॥

अनयोर्मपर्यन्तस्य त्वाऽहावादेशौ स्तः, सौ परे ॥

[3]शेषे लोपः । ७ । २ । ९४ ॥

आत्व–यत्व–निमित्तेतरविभक्तौ परतो युष्मदस्मदोष्टिलोपः स्यात् । त्वम् । अहम् ।

[4]युवाऽऽवौ द्विवचने । ७ । २ । ९२ ॥

द्वयोरुक्तौ युष्मदस्मदोर्मपर्यन्तस्य युवाऽऽवौ स्तो, विभक्तौ ।

---

'युष्मदस्मद्भ्यां ङसो'शित्यतो 'युष्मदस्मद्भ्या'मिति वर्त्तते । 'ङे' इति लुप्तषष्ठीकं पृथक्पदम् । प्रथमा च प्रथमा च–प्रथमे, तयोः—प्रथमयोः । तत्र-एकः प्रथमाशब्दः प्रथमाविभक्त्यर्थकः, अपरो द्वितीयाविभक्त्यर्थकस्तदाह—प्रथमेत्यादि ।

उक्तादन्यः शेषः, आत्वं, यत्वं च प्रागुक्तम् । एवञ्च आत्वयत्वनिमित्तेतर-विभक्तावित्यर्थलाभः स्पष्टः । तदाह—आत्वेति ।

उक्तिर्वचन, द्वयोर्वचन द्विवचनमिति योगार्थमभिप्रेत्याह—द्वयोरुक्ताविति ।

---

१ युष्मद् और अस्मद् से परे जो ङे और प्रथमा, द्वितीया विभक्ति, उनको अम् आदेश हो ।

२ युष्मद् और अस्मद् के मपर्यन्त भाग को 'त्व' और 'अह' आदेश हों, सु परे रहते । ३ आत्व और यत्व के निमित्त से इतर जो विभक्ति, वह परे रहते युष्मद् और अस्मद् के अन्त्य का लोप हो ।

४ दो की उक्ति में, युष्मद् और अस्मद् के मपर्यन्त भाग को 'युव' और 'आव' आदेश हों, विभक्ति परे रहते ।

[1]प्रथमायाश्च द्विवचने भाषायाम् । ७ । २ । ८८ ॥

औङ्येतयोरात्वं, लोके । युवाम् । आवाम् ॥

[2]यूय-वयौ जसि । ७ । २ । ९३ ॥

अनयोर्मपर्यन्तस्य यूय-वयौ स्तो, जसि । यूयम् । वयम् ॥

[3]त्व-मावेकवचने । ७ । २ । ९७ ॥

एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वं मौ स्तो, विभक्तौ ।

[4]द्वितीयायां च । ७ । २ । ८७ ॥

अनयोरात्स्यात् [ द्वितीयायाम् ] त्वाम् । माम् ॥

[5]शसो न । ७ । १ । २९ ॥

आभ्यां परस्य शसो नः स्यात् । अमोऽपवादः । आदेः परस्य । संयोगान्तलोपः । युष्मान् । अस्मान् ॥

[6]योऽचि । ७ । २ । ८९ ॥

अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया । मया ॥

---

ईदृशार्थे च वचनग्रहणमेव मानम्, अन्यथा 'द्वित्वे' इत्येव ब्रूयात्, 'अष्टन आ विभक्ता'वित्यतो विभक्तावित्यस्याऽधिकृततया, द्वित्वे या विभक्तिस्तस्यां परत इत्यर्थस्य सम्भवात् । 'एकवचने'इत्यत्र–उक्तिर्वचनम्, एकस्य वचनमिति योगार्थाभिप्रायेणाह—एकस्योक्ताविति ।

शसो नेति । नेति लुप्तविभक्तिकम् ।

---

१ युष्मद् और अस्मद् को आकार अन्तादेश हो, प्रथमा का द्विवचन परे रहते, भाषा नाम लोक में । २ युष्मद् और अस्मद् के मपर्यन्त भाग को 'यूय' और 'वय' आदेश हों, जस् परे रहते । ३ एक की उक्ति में ( एकत्व की विवक्षा में ) युष्मद् और अस्मद् के मपर्यन्त भाग को 'त्व' और 'म' आदेश हों, विभक्ति परे रहते ।

४ युष्मद् और अस्मद् को आकार अन्तादेश हो, द्वितीया विभक्ति परे रहते ।

५ युष्मद् और अस्मद् से परे जो शस् उसको नकार आदेश हो । ६ युष्मद् और अस्मद् को यकार आदेश हो, अनादेश अजादि विभक्ति परे रहते ।

[1]युष्मदस्मदोरनादेशे । ७ । २ । ८६ ॥

अनयोरात्स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् । आवाभ्याम् ॥ युष्माभिः । अस्माभिः ॥

[2]तुभ्य-मह्यौ ङयि । ७ । २ । ९५ ॥

अनयोर्मपर्यन्तस्य तुभ्य-मह्यौ स्तो ङयि । टिलोपः । तुभ्यम् । मह्यम् ॥

[3]भ्यसोऽभ्यम् । ७ । १ । ३० ॥

आभ्यां परस्य भ्यसोऽभ्यमित्यादेशः स्यात् । युष्मभ्यम् । अस्मभ्यम् ॥

[4]एकवचनस्य च । ७ । १ । ३२ ॥

आभ्यां [ पञ्चम्येकवचनस्य ] ङसेरत् स्यात् । त्वत् । मत् ॥

[5]पञ्चम्या अत् । ७ । १ । ३१ ॥

आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् । अस्मत् ॥

[6]तव-ममौ ङसि । ७ । २ । ९६ ॥

अनयोर्मपर्यन्तस्य तव-ममौ स्तो ङसि ॥

[7]युष्मदस्मद्भ्यां ङसोऽश् । ७ । १ । २७ ॥

[ युष्मदस्मद्भ्यां परस्य ङसोऽशादेशः स्यात् ] ।

---

तुभ्यमह्यौ–प्रथमान्तं, ङयि–सप्तम्यन्तम् ।

---

१ युष्मद् और अस्मद् को आकार आदेश हो, अनादेश हलादि विभक्ति परे रहते ।

२ युष्मद् और अस्मद् के मपर्यन्त भाग को 'तुभ्य' और 'मह्य' आदेश हों, ङे परे रहते ।

३ युष्मद् और अस्मद् से परे जो 'भ्यस्' उसको 'अभ्यम्' आदेश हो ।

४ युष्मद् और अस्मद् से परे जो पञ्चमी का एकवचन ङसि, उसको 'अत्' आदेश हो ।

५ युष्मद् और अस्मद् से परे जो पञ्चमी का भ्यस् उसको 'अत्' आदेश हो ।

६ युष्मद् और अस्मद् के मपर्यन्त भाग को 'तव' और 'मम' आदेश हों, ङस् परे रहते ।

७ युष्मद् और अस्मद् से परे जो 'ङस्' उसको 'अश्' आदेश हो ।

तव । मम । युवयोः । आवयोः ॥

[1]साम आकम् । ७ । १ । ३३ ॥

आभ्यां परस्य साम आकम् स्यात् । [भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देशः ] । युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ॥

[2]युष्मदस्मदोः षष्ठी-चतुर्थी-द्वितीया-स्थयोर्वान्नावौ । ८ । १ । २० ॥

पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वाम्-नौ इत्यादेशौ स्तः ।

[3]बहुवचनस्य वस्नसौ । ८ । १ । २१ ॥

उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः ॥

---

साम इति । सकारेण सहित आम्—साम्, तस्य—सामः । ननु युष्मद्—आमित्यादौ आकमादेशात्पूर्वमनादेशत्वात् 'योऽचि' ति यत्वेन भाव्यं, ततश्च 'शेषे लोप' इत्यस्याऽप्राप्त्या, दलोपाभावेनाऽवर्णान्तत्वाऽभावादामि सर्वनाम्न इति सुटोऽप्राप्त्या, ससुट्कनिर्देशो व्यर्थ इति चेन्न, 'आम् आक' मित्युच्यमाने, आकमि कृते दस्य 'शेषे लोपे' इति लोपे सति, अवर्णान्तत्वात्प्राप्तस्य भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देशस्यावश्यकत्वादित्यन्यत्र विस्तरः । एवञ्च—युष्मद्—आम्, अस्मद्—आमित्यत्र आम्येव साम्त्वस्याऽऽहार्यारोपेण तस्याऽऽकमादेशे, 'शेषे लोप' इति लोपे च 'युष्माकम्' 'अस्माक'मिति सिद्धम् ।

उक्तविधयोः=पदात्परयोरपादादौ च स्थितयोः ।

---

१ युष्मद् और अस्मद् से परे जो साम् ( सुट् सहित आम् ) उसको आकम् आदेश हो ।

२ पद से परे और अपाद के आदि में स्थित जो षष्ठी-चतुर्थी-द्वितीया-विशिष्ट युष्मद् और अस्मद् शब्द, उनको क्रम से 'वाम्' और 'नौ' ये आदेश हों ।

३ पद से परे और अपाद के आदि में स्थित जो षष्ठी-चतुर्थी-द्वितीया-बहुवचन-विशिष्ट-युष्मद् और अस्मद् शब्द, उनको क्रम से 'वस्' और 'नस्' ये आदेश हों ।

[1]ते-मयावेकवचनस्य । ८ । १ । २२ ॥

उक्तविधयोरनयोः षष्ठी-चतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ॥

[2]त्वा-मौ द्वितीयायाः । ८ । १ । २३ ॥

द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः ।

श्रीशस्त्वाऽवतु, माऽपीह, दत्तात्ते, मेऽपि शर्म सः ।
स्वामी ते, मेऽपि स हरिः, पातु वामपि, नौ विभुः ॥ १ ॥
सुखं वां, नौ ददात्वीशः, पतिर्वामपि, नौ हरिः ।
सोऽव्याद्वो, नः, शिवं वो, नो दद्यात्सेव्योऽत्र वः, स नः ॥२॥

---

ते-मयौ—प्रथमान्तम्, एकवचनस्य—षष्ठ्यन्तम् । श्रीश इति । श्रिया ईशः—श्रीशः = विष्णुः, त्वा = त्वाम्, इह—संसारे, अवतु = रक्षतु ॥ इह—संसारे । मा—माम्, अपि—अवतु । अत्र द्वितीयैकवचनान्तयोर्युष्मदस्मदोस्त्वा-मौ द्वितीयाया इति त्वामाऽऽदेशौ । सः = श्रीशो विष्णुः—ते—तुभ्यं, मे = मह्यम्—अपि, शर्म = सुखं, दत्तात् = ददातु । अत्र 'तुभ्य'मित्यस्य, 'मह्य'मित्यस्य च चतुर्थ्यन्तस्य स्थाने 'तेमयावेकवचनस्ये'ति ते—मे आदेशौ । सः = जगत्प्रसिद्धो हरिः—ते = तव, मे = मम अपि,—स्वामी = प्रभुः । अत्र षष्ठ्येकवचनान्तयोः तव ममेत्यनयोः स्थाने ते मे आदेशौ ।

अथ द्विवचनान्तानुदाहरति—पात्विति । विभुः = व्यापको हरिः—वां = युवां, नौ = आवाम्—अपि, पातु = रक्षतु ॥ ईशः = प्रभुर्हरिः—वां—युवाभ्यां, नौ = आवाभ्यां, सुखं—शर्म, ददातु = प्रयच्छतु ॥ हरिः—वां—युवयोः, नौ—आवयोः अपि, पतिः—स्वामी । रक्षक इति यावत् । अत्र षष्ठीचतुर्थीद्वितीयाद्विवचनान्तयोर्युष्मदस्मदोवाम्-नावादेशौ । अथ बहुवचनान्तानुदाहरति—स इति ।

---

१ पद से परे और अपाद के आदि में स्थित जो षष्ठीचतुर्थ्येकवचनान्त युष्मद् और अस्मद् शब्द, उनको क्रमसे 'ते' 'मे' आदेश हों ।

२ पद से परे और अपाद् के आदि में स्थित जो द्वितीयैकवचनान्त युष्मद् और अस्मद् शब्द, उनको क्रमसे 'त्वा' और 'मा'—आदेश हों ।

*[1]समानवाक्ये युष्मदस्मदादेशा वक्तव्याः[1] । *[2]एकतिङ् वाक्यम्* । तेनेह न—ओदनं पच, तव भविष्यति । इह तु स्यादेव—शालीनां ते ओदनं दास्यामि । *[3]एते वाम्—नावादय आदेशा अनन्वादेशे वा वक्तव्याः । अन्वादेशे तु—नित्यं स्युः । धाता ते भक्तोऽस्ति, धाता तव भक्तोऽस्ति वा । तस्मै ते नम इत्येव ॥

सुपात्—सुपाद् । सुपादौ ॥

[4]पादः पत् । ६ । ४ । १३० ॥

पाच्छब्दान्तं यदङ्गं भं, तदवयवस्य पाच्छब्दस्य पदादेशः स्यात् । सुपदः । सुपदा । सुपाद्भ्याम् ॥

अग्निमत्—अग्निमद् । अग्निमथौ । अग्निमथः ॥

---

सः=हरिः—वः=युष्मान्, नः=अस्मान्—अव्यात्=रक्षतु । वः=युष्मभ्यं, नः=अस्मभ्यं, शिवं=कल्याणं, दद्यात्=प्रयच्छतु । अत्र=संसारे, सः=हरिः, वः=युष्माकं, नः=अस्माकं—सेव्यः=पूजनीयः । शरणमिति यावत् । अत्र षष्ठीचतुर्थीद्वितीयाबहुवचनान्तयोर्युष्मदस्मदोर्वस्नसावादेशाविति श्लोकद्वयेन युष्मदस्मदादेशसङ्ग्रहः ।

एकतिङिति । एकतिङन्तघटितमित्यर्थः । एकतिङन्तार्थनिष्ठमुख्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वमेकवाक्यत्वमिति यावत् । एवञ्च ओदनं पचेत्यस्य तिङन्तद्वयघटितत्वेनैकवाक्यत्वाऽभावान्न तवेत्यस्य 'ते' आदेशः ।

अनन्वादेशे उदाहरति—धातेति । अन्वादेशे उदाहरति—तस्मै ते इति । सुष्ठु पादावस्य सुपात् । अग्निं मथ्नातीति—अग्निमत्=अरण्यादिना यज्ञेऽग्नेरुत्पादकः ।

---

१ समान वाक्यमें ही युष्मद् और अस्मद् शब्द को उक्त वाम्—नौ, वस्—नस्, ते—मे, और त्वा मा—ये आदेश हों । २ जो एकतिङन्तार्थमुख्यविशेष्यकबोधका जनक हो, वह 'वाक्य' कहलाता है । ३ पूर्वोक्त जो वाम् नौ आदि आदेश हैं, वे अनन्वादेश में विकल्प से हों, और अन्वादेश में तो नित्य ही हों । ४ पाद् शब्दान्त जो भसञ्ज्ञक अङ्ग, तदवयव जो पाद् शब्द, उसको 'पद्' आदेश हो ।

---

१. 'एकवाक्ये' इति पाठान्तरम् ।

[1]अनिदितां हल उपधायाः क्ङिति । ६ । ४ । २४ ॥

हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात् किति, ङिति च। नुम्। संयोगान्तस्य लोपः। नस्य कुत्वेन ङः। प्राङ्। प्राञ्चौ। प्राञ्चः।

[2]अचः । ६ । ४ । १३८ ॥

लुप्तनकारस्याऽञ्चतेर्भस्याऽकारस्य लोपः स्यात्।

[3]चौ । ६ । ३ । १३८ ॥

लुप्ताऽकार-नकारेऽञ्चतौ परे पूर्वस्याऽणो दीर्घः स्यात्। प्राचः। प्राचा। प्राग्भ्याम्। प्रत्यङ्। प्रत्यञ्चौ। प्रतीचः। प्रत्यग्भ्याम्। उदङ्। उदञ्चौ॥

[4]उद ईत् । ६ । ४ । १३९ ॥

उच्छब्दात्परस्य लुप्तनकारस्याऽञ्चतेर्भस्याऽकारस्य ईत् स्यात्। उदीचः। उदीचा। उदग्भ्याम्॥

[5]समः समि । ६ । ३ । ९३ ॥

---

नुमिति। नुम् = 'उगिदचां सर्वनामस्थानेऽधातो'रित्यनेन नुम्। लोपः = चकारस्य संयोगान्तलोपः। नस्य = नुमो नकारस्य। कुत्वेन = 'क्विन्प्रत्ययस्ये'-त्यनेन विहितेन कुत्वेन। प्रकर्षेण अञ्चतीति प्राङ् = प्राचीनः।

चौ—सप्तम्यन्तम्। उद इति। उदः—पञ्चम्यन्तम्, ईत्—प्रथमान्तम्।

'अच' इत्यनुवर्त्तते, 'अल्लोपोऽन' इत्यतः—अल्लोप इति च 'भस्ये'त्यधिकृतं, तदाह—भस्येति। 'अचः' इत्यस्यापवादः। उदञ्चतीत्युदङ्। समः—षष्ठ्यन्तं,

---

१ हलन्त जो अनिदित् अङ्ग, उसकी उपधा के नकार का लोप हो, कित् ङित् प्रत्यय परे रहते। २ लुप्तनकारक जो अञ्चति, उसके भसंज्ञक अकार का लोप हो।

३ लुप्त हुआ है नकार और अकार जिसका, ऐसा जो अञ्चधातु, वह परे रहते पूर्व अण् को दीर्घ हो। ४ उद्शब्द से परे जो लुप्तनकारक अञ्चधातु, उसके भसंज्ञक अकार को ईकार हो।

५ वप्रत्ययान्त (लुप्तप्रत्ययान्त) अञ्चति परे रहते 'सम्' को 'समि' आदेश हो।

वप्रत्ययान्तेऽञ्चतौ परे [समः सम्यादेशः स्यात् ] ।सम्यङ् । सम्यञ्चौ । समीचः । सम्यग्भ्याम् ॥

[1]सहस्य सध्रिः । ६ । ३ । ९५ ॥

तथा = [ वप्रत्ययान्तेऽञ्चतौ परे सहस्य सध्र्यादेशः स्यात् ] । सध्र्यङ् ।

[2]तिरसस्तिर्यलोपे । ६ । ३ । ९४ ॥

अलुप्ताऽकारेऽञ्चतौ वप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात् । तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । तिरश्चः । [ तिरश्चा ] । तिर्यग्भ्याम् ॥

[3]नाऽञ्चेः पूजायाम् । ६ । ४ । ३० ॥

पूजार्थस्याऽञ्चतेरुपधाया नस्य लोपो न । प्राङ् । प्राञ्चौ । नलोपाऽभावादल्लोपो न । प्राञ्चः । प्राङ्भ्याम् । प्राङ्क्षु ॥ एवं पूजार्थे प्रत्यङ्ङादयः ॥ क्रुङ् । क्रुञ्चौ । क्रुङ्भ्याम् ॥

---

समि–लुप्तप्रथमान्तम् । 'विष्वग्देवयो'रित्यतः–'अञ्चतावप्रत्यये'इत्यनुवर्त्तते । सङ्गतमञ्चतीति सम्यङ् । सहाञ्चतीति सध्र्यङ् = मित्रम् । तिरसः–षष्ठ्यन्तं, तिरि-लुप्तप्रथमान्तम्, अलोपे–सप्तम्यन्तम् । न विद्यते लोपो यस्यासौ-अलोपः, तस्मिन्-अलोपे इति बहुव्रीहिः । अञ्चतिरन्यपदार्थः । अवयवद्वारको लोपः समुदाये उपचर्यते, इत्यत आह–अलुप्ताऽकारे इति ।

'अनिदिता'मित्यत 'उपधाया' इति वर्त्ततेऽत आह—उपधाया इति । अल्लोपो न = 'अच' इति सूत्रेणाऽकारलोपो न । तत्र 'अच' इत्यनेन लुप्तनकारस्याञ्चतेरेव ग्रहणात्पूजायाञ्चाऽञ्चतेर्नकारलोपाभावेनाऽच इत्यकारलोपविधेरप्राप्तेः ।

क्रुङिति । क्रुञ्चेः केवलात् 'ऋत्वि'गित्यादिना क्विन् । क्रुञ्चेर्नलोपाऽभावश्च

---

१ अप्रत्ययान्त अञ्चति परे रहते 'सह' को 'सध्रि' आदेश हो ।

२ लुप्त नहीं हुआ है अकार जिसका, ऐसा जो वप्रत्ययान्त अञ्चधातु, वह परे रहते 'तिरस्' को 'तिरि' आदेश हो ।

३ पूजार्थक जो अञ्चेति, उसके उपधाके नकार का लोप नहीं हो ।

पयोमुक्-पयोमुग् । पयोमुचौ । पयोमुग्भ्याम् । उगित्वान्नुम् ।

[1]सान्त महतः संयोगस्य । ६ । ४ । १० ॥

सान्तसंयोगस्य, महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने । महान् । महान्तौ । महान्तः । हे महन् । महद्भ्याम् ॥

[2]अत्वसन्तस्य चाऽधातोः । ६ । ४ । १४ ॥

अत्वन्तस्योपधाया दीर्घो, धातुभिन्नाऽसन्तस्य चाऽसम्बुद्धौ सौ परे । उगित्त्वान्नुम् । धीमान् । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ

---

निपातनात् । क्रुङ्=क्रौञ्चपक्षी । अत्र चकारस्य सयोगान्तलोपः, नकारस्य 'क्विन्प्रत्ययस्ये' ति कुत्वेन ङकार इति ध्येयम् ।

पयो मुञ्चतीति पयोमुक्=मेघः । नुम्='उगिदचां सर्वनामस्थानेऽधातो' रित्यनेन नुम् । सान्तेति लुप्तषष्ठीकं, महतः–षष्ठ्यन्तं, संयोगस्य–षष्ठ्यन्तम् । 'सान्ते' ति संयोगस्य विशेषणं, तदाह—सान्तसंयोगस्येति ।

महानिति । मह्यते=पूज्यते इति महान् । 'वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्चे' त्युणादिसूत्रेण पूजार्थकान्महधातोः कर्मण्यतिप्रत्ययो निपात्यते, शतृवदतिदेशश्च । तेन उगित्वान्नुमि सान्तमहत इति दीर्घे, हल्ङयादिलोपे, संयोगान्तलोपे च–महानिति सिद्धम् । अत्वेति । अतु इति लुप्तषष्ठ्यन्तम्, असन्तस्य-षष्ठ्यन्तम्, च–अव्ययपदम्, अधातोः–षष्ठ्यन्तम् । अत्वित्यस्याङ्गविशेषणतया तदन्तविधिः । अधातोरिति चाऽसन्तविशेषणम् । 'नोपधायाः' इत्यत 'उपधाया' इति, 'सर्वनामस्थाने चाऽसम्बुद्धाविति' वित्यतोऽसम्बुद्धाविति, 'ढ्रलोपे' इत्यतो 'दीर्घ' इति, 'सौ चे' त्यतः साविति चानुवर्त्तते, तदाह–अत्वसन्तस्येति । प्रशस्ता धीरस्त्यस्य धीमान् । धीमत्– स् इत्यत्र परं, कृताऽकृतप्रसङ्गितया नित्यञ्च

---

१ सान्त जो संयोग, और महत्शब्द का जो नकार, उनकी उपधा को दीर्घ हो, सम्बुद्धिभिन्न सर्वनामस्थान परे रहते ।

२ अत्वन्त की उपधा को दीर्घ हो, और धातु भिन्न जो असन्त, उसकी उपधा को भी दीर्घ हो, सम्बुद्धिभिन्न सु परे रहते ।

महद्वत् ॥ भातेर्डवतुः । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भवान् । भवन्तौ । भवन्तः ॥ शत्रन्तस्य—भवन् ॥

[1]उभे अभ्यस्तम् । ६ । १ । ५ ॥

षाष्ठद्वित्वप्रकरणे ये द्वे विहिते, ते उभे समुदिते अभ्यस्तसंज्ञे स्तः ॥

[2]नाऽभ्यस्ताच्छतुः । ७ । १ । ७८ ॥

अभ्यस्तात्परस्य शतुर्नुम् न स्यात् । ददत् । ददद् । ददतौ । ददतः ॥

[3]जक्षित्यादयः षट् । ६ । १ । ६ ॥

षड् धातवोऽन्ये, जक्षितिश्च सप्तमः, एते अभ्यस्तसञ्ज्ञाः स्युः । जक्षत्-जक्षद् । जक्षतौ । जक्षतः ॥ एवं जाग्रत् । दरिद्रत् । शासत् ।

---

'उगिदचा' मिति नुमं बाधित्वा, वचनसामर्थ्यात्पूर्वमत्वसन्तस्येति दीर्घः, अन्यथा पूर्वं नुमि, अत्वन्तत्वाऽभावाद्दीर्घविधानं व्यर्थमेव स्यात् । ततश्च नुमि, हल्ङ्यादिलोपे, संयोगान्तलोपे च–धीमानिति सिद्धम् ।

भवानिति । डवतुप्रत्ययस्योणादितया कप्रत्ययावधिस्वादिप्रत्ययबहिर्भूतत्वेन तस्मिन्परतः पूर्वस्य भत्वाऽभावेन, 'टे' रिति टिलोपस्याऽप्राप्तावपि, डित्त्वसामर्थ्यादेव अभस्यापि टेर्लोपेन, भवच्छब्दस्य निष्पत्तावुगित्वान्नुमि, 'अत्वसन्तस्ये' ति दीर्घे, हल्ङ्यादिलोपे, संयोगान्तलोपे च–भवानिति सिद्धम् ।

भवतीति-भवन् । अत्र शतृप्रत्ययान्तस्य भवच्छब्दस्याऽत्वन्तत्वाऽभावादत्वसन्तस्येति दीर्घाऽभावेन, भवन् , भवन्तौ, भवन्त इत्येवमेव रूपाणीत्याशयः ।

ददातीति, ददत् = दानं कुर्वन् । षड् धातवः—जागृ–दरिद्रा–शासु–चकासृ–दीधीङ्—वेवीङ् इति षड् धातवः ।

---

१ षाष्ठद्वित्वप्रकरण में जो दो ( द्वित्व ) विधान किये हैं, वे दोनों समुदित ही अभ्यस्त संज्ञक हों ।

१ अभ्यस्त से परे जो 'शतृ' उसको नुम् नहीं हो ।

३ 'जागृ' आदि छ धातु; और 'जक्ष' धातु, ये सात धातु अभ्यस्तसंज्ञक हों।

चकासत् ॥ गुप्—गुब् । गुपौ । गुपः । गुब्भ्याम् ॥

[1]त्यदादिषु दृशोऽनालोचने कञ्च । ३ । २ । ६० ॥

त्यदादिषूपदेष्वज्ञानार्थाद् दृशेः कञ् स्याच्चात् क्विन् ॥

[2]आ सर्वनाम्नः । ६ । ३ । ९१ ॥

सर्वनाम्न आकारोऽन्तादेशः स्याद्-दृग्-दृश-वतुषु । तादृक्—तादृग् । तादृशौ । तादृशः । तादृग्भ्याम् ॥ व्रश्चेति षः । जश्त्व-चर्त्वे । विट्—विड् । विशौ । विशः । [ विशम् ] । विड्भ्याम् ॥

[3]नशेर्वा । ८ । २ । ६३ ॥

नशेः कवर्गोऽन्तादेशो वा स्यात्, पदान्ते । नक्-नग्, नट्-नड् । नशौः । नशः । नग्भ्याम्, नड्भ्याम् ॥

[4]स्पृशोऽनुदके क्विन् । ३ । २ । ५८ ॥

अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात् । घृतस्पृक्—घृतस्पृग् ।

---

गोपायतीति गुप्=रक्षकः । 'गुपू रक्षणे'–क्विप् । वैकल्पिकत्वादायप्रत्ययाऽभावः ।

आ सर्वेति । 'आ'–इति लुप्तप्रथमान्तं, 'सर्वनाम्नः' षष्ठ्यन्तम् । तादृगिति । तदुपपदात्–दृश्–धातोः क्विनि, क्विनो लोपे, 'आ सर्वनाम्न' इति तदो दकारस्याऽऽकारे, दीर्घे, कृदन्तत्वात्प्रातिपदिकत्वेन सुविभक्तौ, हल्ङ्यादिलोपे च, कुत्वस्याऽसिद्धत्वात् 'व्रश्चे' ति षत्वे, जश्त्वेन डकारे, 'क्विन्प्रत्ययस्ये'ति कुत्वे, 'वावसाने' इति चर्त्वविकल्पे च–तादृक् तादृगिति रूपम् । स इव दृश्यते, तमिव च यं पश्यन्ति जनाः, स–तादृक् । विडिति । व्रश्चेति षत्वे, जश्त्वे, चर्त्वे, हल्ङ्यादि-लोपे विडिति सिद्धम् ।

नश्यतीति नक् । अनुदके=उदकशब्दभिन्ने सुबन्ते । घृतं स्पृशतीति

---

१ त्यदादि उपपद रहते अज्ञानार्थकदृश धातु से कञ् प्रत्यय हो, चकार से क्विन् प्रत्यय भी हो । सर्वनाम को आकार अन्तादेश हो, दृग्, दृश और वतु परे रहते ।

३ नश धातु को कवर्ग अन्तादेश हो, विकल्प करके, पदान्त में ।

४ उदकभिन्न सुबन्त उपपद रहते स्पृश् धातु से क्विन् प्रत्यय हो ।

घृतस्पृशौ । घृतस्पृशः ॥ दधृक्-दधृग् । दधृषौ । [दधृषः] । दधृग्भ्याम् ॥ रत्नमुट्—रत्नमुड् । रत्नमुषौ । रत्नमुड्भ्याम् ॥ षट् । षड् । षड्भिः । षड्भ्यः । षड्भ्यः । षण्णाम् । षट्सु, षट्त्सु ॥

रुत्वं प्रति षत्वस्याऽसिद्धत्वात्ससजुषोरिति रुत्वम् ॥

[1]र्वोरुपधाया दीर्घः इकः । ८ । २ । ७६ ॥

रेफ-वान्तस्य धातोरुपधाया इको दीर्घः स्यात् , पदान्ते । पिपठीः । पिपठिषौ पिपठीर्भ्याम् ॥

[2]नुम्विसर्जनीयशर्व्यवायेऽपि । ८ । ३ । ५८ ॥

एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात् । ष्टुत्वेन पूर्वस्य षः । पिपठीष्षु–पिपठीःषु ॥ चिकीः । चिकीर्षौ ।

---

घृतस्पृक् ।दधृगिति । 'ञिधृषा प्रागल्भ्ये' इत्यस्मात् 'ऋत्विग्' इत्यादिना क्विन् । द्वित्वञ्च निपातनात् । अभ्यासकार्यम् । प्रातिपदिकत्वात्स्वाद्युत्पत्तिः । दधृष्–स्– इत्यत्र जश्त्वं प्रति 'क्विन्प्रत्ययस्ये'ति कुत्वस्याऽसिद्धत्वात्पूर्वं 'झलां जशोऽन्ते' इति जश्त्वेन डः, तस्य 'क्विन्प्रत्ययस्वे'ति कुत्वेन गः, तस्य चर्त्वेन क इति प्रक्रिया ।

दधृक् = धृष्टः, प्रगल्भश्च । रत्नानि मुष्णाति=चोरयतीति रत्नमुट् । षडिति- षट्शब्दो नित्यं बहुवचनान्तः । जश्शसोः 'षड्भ्यो लु' गिति लुक् । जश्त्वचर्त्वे । षष्–आमित्यत्र 'षट्चतुर्भ्यश्चे'ति नुट् । 'अना'मितिपर्युदासाल्टुत्वनिषेधाऽभावे, 'ष्टुना ष्टु'रिति ष्टुत्वेन णत्वे, 'स्वादिष्वि'ति पूर्वस्य पदसंज्ञायां, पदान्तत्वाज्जश्त्वेन डकारे, 'प्रत्यये भाषाया'मिति नित्यमनुनासिके च–षण्णामिति सिद्धम् ।

पिपठीरिति । पठितुमिच्छतीति–पिपठिषति, पिपठिषतीति–पिपठीः = पठनमभिलाषुकः ।

पिपठीष्षु इति । 'वा शरी'ति वा विसर्गः ।

कर्तुमिच्छति चिकीर्षति, चिकीर्षतीति–चिकीः । चिकीर्ष्–स् इत्यत्र

---

१ रेफान्त और वान्त जो धातु, उसके उपधाभूत इक् को दीर्घ हो, पदान्त में।

२ नुम् विसर्जनीय और शर् इनके प्रत्येक के व्यवधान में भी इण् और कवर्ग से परे सकार को मूर्धन्य ( षकार ) आदेश हो ।

चिकीर्भ्याम् । चिकीर्षु ॥ विद्वान् । विद्वांसौ । हे विद्वन् ।

[1]वसोः सम्प्रसारणम् । ६ । ४ । १३१॥

वस्वन्तस्य भस्य सम्प्रसारणं स्यात् । विदुषः । वसुस्रंस्विति दः । विद्वद्भ्याम् ॥

[2]पुंसोऽसुङ् । ७ । ८९ ॥

सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात् । पुमान् । हे पुमन् । पुमांसौ । पुंसः । पुंभ्याम् । पुंसु ॥ ऋदुशनेत्यनङ् । उशना । उशनसौ ।

[3]❀अस्य सम्बुद्धौ वाऽनङ्, नलोपश्च वा वाच्यः । हे उशन, हे उशनन्, हे उशनः । हे उशनसौ । उशनोभ्याम् । उशनस्सु ॥ अनेहा । अनेहसौ । हे अनेहः ॥ वेधाः । वेधसौ । हे वेधः । वेधोभ्याम् ॥

---

हल्ङ्यादिलोपे, संयोगान्तलोपं प्रति षत्वस्याऽसिद्धतया सकारबुद्ध्या 'रात्सस्ये'ति सकारस्य संयोगान्तलोपे, रेफस्य विसर्गे च—'चिकीः'इति सिद्धम् । चिकीर्भ्यामिति । अत्र भ्यामि परतः पूर्वस्य 'स्वादिष्वि'ति पदत्वात्सकारस्य संयोगान्तलोपे, चिकीर्भ्यामिति सिद्धम् । चिकीर्षु इति । चिकीर्ष्-सु इत्यत्र सकारस्य 'रात्सस्ये'ति नियमात्संयोगान्तलोपे, 'चिकीर्षु इति सिद्धम् । रेफस्य विसर्गस्तु न भवति, 'रोः सुपी'ति सूत्रेण सप्तमीबहुवचने रोरेव रेफस्य विसर्गो नान्यरेफस्येति नियमात् । उशना=शुक्रः । 'उशना भार्गवः कवि'रित्यमरः ।

अस्येति । अस्य=उशनस्-शब्दस्य ।

अनेहा=कालः । 'कालो दिष्टोऽप्यनेहाऽपी'त्यमरः । 'अत्वसन्तस्ये'ति

---

१ वस्वन्त जो भसंज्ञक अङ्ग, उसको सम्प्रसारण ( आदेश ) हो ।

२ सर्वनामस्थान को विवक्षा में 'पुंस्' शब्द को असुङ् आदेश हो ।

३ 'उशनस् शब्द को अनङ् आदेश हो, सम्बुद्धि ('सु') परे रहते, विकल्प करके । और इसके नकार का लोप भी हो, विकल्प करके ।

## [1]अदस औ सुलोपश्च । ७ । २ । १०७ ॥

अदस औत्स्यात्सौ परे, सुलोपश्च । 'तदो'रिति सः । असौ । त्यदाद्यत्वम् । पररूपत्वम् । वृद्धिः ॥

## [2]अदसोऽसेर्दादु दो मः । ८ । २ । ८० ॥

अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो, दस्य मश्च । आन्तरतम्याद्ध्रस्वस्य उः, दीर्घस्य ऊः । अमू । 'जसः शी' । गुणः ॥

## [3]एत ईद् बहुवचने । ८ । २ । ८१ ॥

अदसो दात्परस्यैत ईद्स्य च मो, बह्वर्थोक्तौ । अमी । 'पूर्वत्राऽसिद्ध'मिति विभक्तिकार्यं प्राक्, पश्चादुत्व-मत्वे । अमुम् । अमू । अमून् ।

मुत्वे कृते घिसंज्ञायां नाभावः ।

## [4]न मु ने । ८ । २ । ३ ॥

'ना'भावे कर्तव्ये, कृते च मुभावो नाऽसिद्धः । अमुना । अमूभ्याम्३ । अमीभिः । अमुष्मै । अमीभ्यः २ । अमुष्मात् । अमुष्य । अमुयोः २ । अमीषाम् । अमुष्मिन् । अमीषु ॥

## इति हलन्तपुँल्लिङ्गप्रकरणम् ॥

---

दीर्घः । वेधाः = प्रजापतिः । न मु ने इति । न—अव्ययं पदं, मु = प्रथमान्तम्, ने—सप्तम्यन्तम् । 'ने' इति विषयसप्तमीत्याशयेनाह—कर्त्तव्ये इति । अन्यथा घेः परत्वाऽभावेन नाभावो न स्यादिति भावः । नन्वेवमपि कृते नाभावे 'सुपि चे'ति दीर्घः स्यात्, दीर्घं प्रति मुत्वस्याऽसिद्धत्वादत आह—कृते चेति । एतच्च 'ने' इत्यस्याऽऽवृत्त्या लभ्यते । एकत्र च 'ने' इति विषयसप्तमी, अपरत्र च परसप्तमीति च विवेकः ॥ ॐ ॥ इति हलन्ताः पुँल्लिङ्गाः ॥ ॐ ॥

---

१ अदस् शब्द के अन्त्य अल् को औकारादेश हो, सुपरे रहते । और सु का लोप भी हो । २ असान्त जो अदस् शब्द, उसके दकार से परे जो ह्रस्व उसको उ आदेश हो, और दीर्घ को ऊ आदेश हो, और दकार को मकार आदेश हो । ३ अदस् शब्द के दकार से परे जो एकार, उसको ईकार आदेश हो, और दकार को मकार हो, बहुवचन में । ४ 'ना' भाव यदि करना हो, या 'ना' भाव कर भी लिया हो, तो भी मुभाव (मुत्व) असिद्ध नहीं हो ।

# अथ हलन्तस्त्रीलिंगप्रकरणम् ।

## [1]नहो धः । ८ । २ । ३४ ॥

नहो हस्य धः स्याज्झलि, पदान्ते च ।

## [2]नहि-वृति-वृषि-व्यधि-रुचि-सहि-तनिषु क्वौ । ६ । ३ । ११६ ॥

क्विबन्तेष्वेषु परेषु पूर्वपदस्य दीर्घः स्यात् । उपानत्, उपानद् । उपानहौ । उपानत्सु ॥ क्विन्नन्तत्वात् कुत्वेन घः । उष्णिक्, उष्णिग् । उष्णिहौ । [ उष्णिहः ] । उष्णिग्भ्याम् । उष्णिक्षु । द्यौः । दिवौ । दिवः । द्युभ्याम् । द्युषु ॥ गीः । गिरौ । गिरः ॥ एवं पूः ॥

चतस्रः । चतस्रः । चतसृणाम् ॥ का । के । काः । सर्वावत् ॥

## [3]यः सौ । ७ । २ । ११० ॥

इदमो दस्य यः स्यात्सौ । इयम् । त्यदाद्यत्वम् । पररूपत्वम् । टाप् । 'दश्चे'ति मः । इमे २ । इमाः २ । इमाम् । अनया । 'हलि लोपः' । आभ्याम् । आभिः । अस्यै । अस्याः । अस्याः । अनयोः । अनयोः । आसाम् । अस्याम् । आसु ॥ त्यदाद्यत्वम् । टाप् । स्या । त्ये । त्याः ॥ एवं

---

हस्येति । 'हो ढ' इत्यतो 'ह' इत्यनुवृत्तेरलोऽन्त्यपरिभाषया वा 'न हो हस्ये'ति लभ्यते । झलीति । झलि परतः, पदान्ते वा विद्यमानस्येत्यर्थः ।

उपानदिति । उपपूर्वान्नहेः सम्पदादित्वात्क्विपि 'नहिवृती' त्यादिना दीर्घः । सोर्हल्ङ्यादिलोपः, धत्वं, जश्त्वचर्त्वे । उपानत्=पादत्राणम् । उष्णिगिति । उत्पूर्वात्ष्णिहेः प्रीत्यर्थकाद्दत्विगादिना क्विन् । निपातनाद्दलोपषत्वे । क्विन्नन्तत्वा-त्कुत्वेन हस्य घः, जश्त्वचर्त्वे । उष्णिक्=छन्दोविशेषः । गीः=वाणी । 'गीर्वाग्वाणी सरस्वती' इत्यमरः । पूः=नगरी । 'पूः स्त्री पुरीनगर्यौ वे'त्यमरः ।

---

१ नह् धातु के हकार को धकार हो, झल् परे रहते और पदान्त में ।

२ क्विबन्त नहि वृति वृषि व्यधि रुचि सहि तनि धातु परे रहते पूर्वपद को दीर्घ हो ।

३ इदम् शब्द के दकार को यकार आदेश हो, सु परे रहते ( स्त्रीलिङ्ग में ) ।

वाग्भ्याम् ॥ वाक्षु ।
तद्, यद्, एतद् ॥ वाक्, वाग्। वाचौ। वाचः। 'अप्तृन्'निति दीर्घः। आपः। अपः।
अप्शब्दो नित्यं बहुवचनान्तः ॥

[1]अपो भि । ७ । ४ । ४८ ॥

अपस्तकारः स्याद्भादौ प्रत्यये परे। अद्भिः। अद्भ्यः। अद्भ्यः।
अपाम्। अप्सु ॥ दिक्—दिग्। दिशौ। दिशः। दिग्भ्याम्। 'त्यदादि-
ष्वि'ति दृशेः क्विन्विधानादन्यत्रापि कुत्वम्। दृक्, दृग्। दृशौ। दृशः।
दृग्भ्याम् ॥ त्विट्, त्विड्। त्विषौ। त्विषः। त्विड्भ्याम्। त्विट्त्सु।
त्विट्सु ॥ 'ससजुषो'रिति रुत्वम्। सजूः। सजुषौ। सजूर्भ्याम् ॥ आशीः।
आशिषौ। आशिषः। आशीर्भ्याम् ॥ असौ। उत्व-मत्वे। अमू। अमूः।
अमुया। अमूभ्याम् ३। अमूभिः। अमुष्यै। अमूभ्यः २। अमुष्याः २।
अमुयोः। २। अमूषाम्। अमुष्याम्। अमूषु ॥

इति लघुकौमुद्यां हलन्तस्त्रीलिङ्गप्रकरणम् ॥

———

आप इति। 'आपः स्त्री भूम्नि वार्वारी'त्यमरः।

दिगिति। क्विन्नन्तत्वात्क्विन्प्रत्ययस्येति प्राप्तस्य कुत्वस्याऽसिद्धत्वाद् 'व्रश्चे'ति षः। ततो जश्त्वेन डः। ततः कुत्वेन गः। तस्य चर्त्वेन कः। अन्यत्रापि=त्यदाद्युपपदत्वाऽभावेपि। क्विन्प्रत्ययस्ये'त्यस्य—'क्विन्प्रत्ययो यस्मात्कदाचिदपि दृष्टस्तस्य कवर्गोऽन्तादेश' इत्यर्थेन—दृशस्त्यदादद्युपपदे 'तादृ'गित्यादौ क्विन्प्रत्ययस्य दृष्टतया, केवलादपि दृशः (क्विनोऽभावेऽपि) कुत्वं भवत्येवेत्याशयः।

सजूरिति। सह जुषते इति—सजूः=सखी।

❀ इति हलन्ताः स्त्रीलिङ्गाः ❀

———

[1] अप् शब्द को तकार अन्तादेश हो, भकारादि प्रत्यय परे रहते।

# अथ हलन्तनपुंसकलिंगप्रकरणम् ।

स्वमोर्लुक् । दत्वम् । स्वनडुत्, स्वनडुद् । स्वनडुही । 'चतुरनडुहो'-रित्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् ॥ वाः । वारी । वारि । वार्भ्याम् ॥ चत्वारि २॥ किम् । के । कानि ॥ इदम् । इमे । इमानि ॥ * [1]'अन्वादेशे नपुंसके एनद्वक्तव्यः * । एनत् । एनद् । एने । एनानि । एनेन । एनयोः २ ॥

अहः । 'विभाषा ङि-श्योः' । अह्नी-अहनी । अहानि ॥

[2]अहन् । ८ । २ । ६८ ॥

'अह'न्नित्यस्य रुः स्यात् पदान्ते । अहोभ्याम् ॥ दण्डि । सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः । हे दण्डिन् ! हे दण्डि । दण्डिनी । दण्डीनि । दण्डिना । दण्डिभ्याम् ॥ सुपथि । टेर्लोपः । सुपथी । सुपन्थानि ॥ ऊर्क्, ऊर्ग् । ऊर्जी । ऊर्न्जि । न-र-जानां संयोगः ॥ तत् ।

---

स्वनडुदिति । सुष्ठु अनड्वाहो यस्मिन् कुले, याने वा तत्—स्वनडुत् कुलं, यानं वा । 'जश्शसोः शि' रिति विहितस्य श्यादेशस्य 'शि सर्वनामस्थान' मिति सर्वनामस्थानसंज्ञकतया, 'चतुरनडुहो' रित्यामि, यणि, 'नपुंसकस्य झलच' इति नुमि च-'स्वनड्वांहो' ति रूपं सिद्धम् । वाः=जलम् । 'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जल' मित्यमरः । वारीति । 'वार् इ' इत्यत्र अझलन्तत्वान्न नुम् । वारि । किमिति । किम्शब्दात्स्वमोः 'स्वमोर्नपुंसका' दिति लुकि, लुका लुप्तत्वान्न लुमताऽङ्गस्येति प्रत्ययलक्षणनिषेधेन विभक्तिपरत्वाऽभावात्किमः क इति कादेशो न । अहरिति । अहन्—शब्दात्स्वमोः 'स्वमोर्नपुंसका' दिति लुकि, 'रोऽसुपी' ति अह्नो रेफादेशे, विसर्गः । दण्डोऽस्त्यस्य तत्—दण्डि कुलम् । सुष्ठु पन्था यस्मिन् तत्—सुपथि नगरं, वनञ्च । ऊर्क् =बलम् ।

ऊर्ज् शब्दाज्जस्सोः श्यादेशे, सर्वनामस्थानसंज्ञायां, 'नपुंसकस्य झलच' इति नुमि—'ऊर्न्जि' इति सिद्ध्यति ।

---

१ 'एतद्' शब्द को अन्वादेश में 'एनत्' आदेश हो, नपुंसकलिङ्ग में ।

२ 'अहन्' शब्द को 'रु' आदेश हो, पदान्त में ।

ते। तानि ॥ यत्। ये। यानि ॥ एतत्। एते। एतानि॥ गवाक्, गवाग्। गोची। गवाञ्चि। पुनस्तद्वत्। गोचा। गवाग्भ्याम्।

शकृत्। शकृती। शकृन्ति ॥ ददत्-ददती।

## [1]वा नपुंसकस्य। ७। १। ७९ ॥

अभ्यस्तात्परो यः शता. तदन्तस्य क्लीबस्य नुम् वा स्यात्, सर्वनामस्थाने परे। ददन्ति-ददति ॥ तुदत्।

## [2]आच्छी-नद्योर्नुम्। ७। १। ८० ॥

---

गवागिति। गवाक्-ग्, गोअक्-ग्। गोऽक्-ग्। गवाङ्, गोअङ्, गोऽङ् ॥ गोची। गवाञ्ची। गोअञ्ची। गोञ्ची ॥ गवाञ्चि, गोअञ्चि, गोऽञ्चि ॥ पुनस्तद्वत्। गोचा। गवाञ्चा, गोअञ्चा, गोञ्चा॥ गवाग्भ्यां, गोअग्भ्यां, गोग्भ्याम्। गोग्भ्याम्। गवाङ्भ्यां, ३ गोअङ्भ्यां, ३ गोऽङ्भ्याम् ३। गवाग्भिः, गोअग्भिः, गोऽग्भिः। गवाङ्भिः, गोअङ्भिः गोऽङ्भिः ॥ गोचे। गवाञ्चे, गो-अञ्चे, गोञ्चे। भ्यामि पूर्ववत्। गवाग्भ्यः, २ गोऽग्भ्यः २ गोग्भ्यः २। गवाङ्भ्यः, २ गो-अङ्भ्यः २ गोऽङ्भ्यः २। गोचः। गवाञ्चः, गोअञ्चः, गोञ्चः २॥ भ्यामादौ पूर्ववत्। ङसि पूर्ववत् ॥ गोचोः, गवाञ्चोः, गोअञ्चोः। गोञ्चोः २॥ गोऽचां, गवाञ्चां, गोअञ्चान्, गोऽञ्चाम् ॥ गोचि। गवाञ्चि, गोअञ्चि, गोऽञ्चि ॥ गवाक्षु, गोअक्षु, गोक्षु। गवाङ्क्षु, गोअङ्क्षु, गोऽङ्क्षु। गवाङ्षु, गोअङ्षु, गोङ्षु-इति १०९ रूपाणि। तदुक्तं—

'गवाक्शब्दस्य रूपाणि क्लीबेऽर्चा-गतिभेदतः।
असन्ध्य-वङ्-पूर्वरूपैर्नवाधिकशतं ( १०९ ) मतम् ॥ १ ॥
स्वम्सुप्सु नव, षड् भादौ षट्के स्युस्त्रीणि जश्शसोः।
चत्वारिं शेषे दशके, रूपाणीति विभावय' ॥ २ ॥ इति।
शकृदिति। शकृत्—मलम्।

---

१ अभ्यस्त से परे जो 'शतृ' प्रत्यय, तदन्त जो क्लीब अङ्ग, उसको नुम् हो, विकल्प करके, सर्वनामस्थान परे रहते।

२ अवर्णान्त अङ्ग से परे जो शतृ प्रत्यय का अवयव, तदन्त जो शब्द स्वरूप, उसको नुम् हो, विकल्प करके, शी (प्रत्यय) और नदीसंज्ञक परे रहते।

अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्य नुम् वा स्याच्छीनद्योः परतः। तुदन्ती–तुदती। तुदन्ति॥ पचत्।

[1]शप्-श्यनोर्नित्यम्। ७। १। ८१।

शप्श्यनोरात्परो य शतुरवयवस्तदन्तस्य नित्यं नुम् स्याच्छीनद्योः [ परतः ] पचन्ती। पचन्ति॥ दीव्यत्। दीव्यन्ती। दीव्यन्ति॥ धनुः। धनुषी। 'सान्ते'ति दीर्घः। 'नुम्विसर्जनीये'ति षः। धनूंषि। धनुषा। धनुर्भ्याम्॥ एवं चक्षु-र्हविरादयः॥ पयः। पयसी। पयांसि। पयसा। पयोभ्याम्॥ सुपुम्। सुपुंसी। सुपुमांसि॥

अदः। विभक्तिकार्यम्। उत्व-मत्वे। अमू। अमूनि। शेषं पुंवत्॥

॥ इति हलन्तनपुंसकलिङ्गप्रकरणम्॥

---

# अथाव्ययप्रकरणम्।

[2]स्वरादि-निपातमव्ययम्। १। १। ३७॥

स्वरादयो, निपाताश्चाऽव्ययसंज्ञाः स्युः। स्वर्। अन्तर्। प्रातर्।

---

सुपुमिति। शोभनाः पुमांसो यस्मिन् कुले तत्–सुपुम्–कुलम्।

॥ इति हलन्ता नपुंसकलिङ्गाः॥

---

स्वर्–स्वर्गे, परलोके च। अन्तर्–मध्ये। प्रातर्–प्रभाते। पुनर्–अप्रथमे, विशेषे च। सनुतर्–अन्तर्धाने। स्वराद्याः पञ्च रेफान्ताः, तेन 'स्वर्याति' प्रातरत्रे'त्यादौ 'हशि चे'त्याद्युत्त्वं न। तत्र 'रो'रित्युकारानुबन्धग्रहणात्। उच्चैस्–

---

१ शप् श्यन् सम्बन्धी अकार से परे जो शतृ का अवयव, तदन्त जो शब्दस्वरूप, उसको नित्य नुम् का आगम हो, शी और नदी परे रहते। २ स्वरादि गणपठित जो शब्द और निपातसंज्ञक जो शब्द उनकी अव्यय संज्ञा हो।

पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते । युगपत् । आरात् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । अधस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । नञ् । हेतौ । इद्धा । अद्धा । सामि ॥

( ग० ) वत् । ब्राह्मणवत् । क्षत्रियवत् ।

सना । सनत् । सनात् । उपधा । तिरस् ! अन्तरा । अन्तरेण । ज्योक् । कम् । शम् । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । श्रौषट् । वौषट् । अन्यत् ।

---

महति । नीचैस्—अल्पे । शनैस्—क्रियामान्द्ये । ऋधक्—सत्ये । 'वियोग-शीघ्र-सामीप्य-लाघवेष्वि'त्यन्ये । ऋते—वर्जने । युगपत्—एककाले । आरात्—दूर-समीपयोः । पृथक्—भिन्ने । ह्यस्—अतीतेऽह्नि । श्वस्—आगामिदिने । दिवा—दिने । रात्रौ—निशि । सायम्—निशामुखे । प्रदोषे । चिरम्—बहुकाले । मनाक्—अल्पे । ईषत्—अल्पे । जोषम्—सुखे, मौने च । तूष्णीम्—मौने । बहिस्—अवस्—इमौ बाह्ये । समया—समीपे, मध्ये च । निकषा—समीपे । स्वयम्—आत्मना इत्यर्थे । ( वृथा—व्यर्थे । नक्तम्—रात्रौ ) । नञ्—निषेधे ।

'तत्सादृश्यमभावश्च, तदन्यत्वं, तदल्पता ।

अप्राशस्त्यं, विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥' इति ।

हेतौ—निमित्ते । इद्धा—प्राकाश्ये । अद्धा—स्फुटाऽवधारणयोः । 'तत्त्वाति-शययो'रित्यन्ये । सामि—अर्द्धे, निन्दिते च । वदिति । 'तेन तुल्य'मित्यादि-विहितो वतिप्रत्ययो गृह्यते । प्रत्ययग्रहणे च तदन्तग्रहणमित्याशयेनोदाहरति-ब्राह्मणवदिति । सना सनत् सनात्—एतत्त्रयं नित्ये । उपधा—भेदे । तिरस्—अन्तर्धाने, तिर्यगर्थे, परिभवे च । अन्तरा—मध्ये, विनाऽर्थे च । अन्तरेण—वर्जने । ज्योक्—कालाधिक्ये, शीघ्रे, प्रश्ने, इदानीमर्थे च । कम्—वारिमूर्ध-निन्दासुखेषु । शम्—सुखे । सहसा—आकस्मिका-ऽविमर्शयोः । विना—वर्जने । नाना—अनेक-विनार्थयोः । स्वस्ति—मङ्गले । स्वधा—पितृहविर्दाने । अलम्—भूषण-पर्याप्ति-शक्ति-वारण-निषेधेषु । वषट् श्रौषट् वौषट्—एतत्त्रयं देवहविर्दाने ।

अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रवाहुकम् । [ प्रवाहिका ] । आर्यहलम् । अभीक्ष्णम् । साकम् । सार्धम् । नमस् । हिरुक् । धिक् । अथ । अम् । आम् । प्रताम् । प्रशाम् । प्रतान् । मा । माङ् । [1]आकृतिगणोऽयम्

अन्यत्–अन्यार्थे । अस्ति–सत्तायाम् । उपांशु–अप्रकाशोच्चारणे, रहस्ये च । क्षमा–क्षान्तौ । विहायसा–आकाशे । दोषा–रात्रौ । मृषा, मिथ्या–वितथे । मुधा–व्यर्थे । पुरा–अविरते, चिरातीते, भविष्यदासन्ने च । मिथो, मिथस्–इति द्वयं–रहसि, सहार्थे च । प्रायस्–बाहुल्ये । मुहुस्–पुनरर्थे । प्रवाहुकं–समकाले, ऊर्ध्वार्थे च । प्रवाहुकमित्यत्र 'प्रवाहिके'त्यपि क्वचित्पाठः । आर्यहलम्–बलात्कारे । केचित्तु–आर्येति प्रतिबन्धे, हलमिति निषेधेऽनुवादे चेत्यवमव्ययद्वयमिदमत्रेत्याहुः । अभीक्ष्णं–पौनःपुन्ये । साकम्–सार्धम्–इति द्वयं–सहार्थे । नमस्–नमस्कारे । हिरुक्–वर्जने । धिक्–निन्दायां, भर्त्सने च । अथ–मङ्गले, प्रारम्भे च । अम्–शैघ्र्ये, अल्पे च । आम्–अङ्गीकारे । प्रताम्–ग्लानौ । प्रशाम्–समानार्थे । प्रतान्–विस्तारे । अत्र प्रतानिति नान्तस्य पुनः पाठसामर्थ्यात्प्रताम्, प्रशामित्यनयोर्मो नो धातोरिति नत्वं न । प्रशामित्यत्र प्रशानिति नान्तपाठस्त्वसाम्प्रदायिकः । मा–माङ्–एतौ निषेधे ।

आकृत्या स्वरूपेणैव गण्यते इति–आकृतिगणः । एवञ्च एवंजातीयका अन्येऽपि स्वरादिगणे बोध्याः । तथा हि–कामम्–यथेच्छमित्यर्थे ( स्वाच्छन्द्ये ) । प्रकामम्–अतिशये । भूयस्–पुनरर्थे । साम्प्रतम्–न्याय्ये । परम्–किन्त्वर्थे । साक्षात्–प्रत्यक्षे । साचि–तिर्यगर्थे । सत्यम्–अर्धाङ्गीकारे । मङ्क्षु, आशु–इदं द्वयं–शैघ्र्ये । संवत्–वर्षे । अवश्यम्–निश्चये । सपदि–शैघ्र्ये । बलवत्–अतिशये । उषा–रात्रौ । ओम्–अङ्गीकारे, ब्रह्मणि च । भूर्–पृथिव्याम् । भुवर्–अन्तरिक्षे । झटिति, झगिति, तरसा–एते शैघ्र्ये । सुष्ठु–प्रशंसायाम् । दुष्ठु–निकृष्टे । सु–पूजायाम् । कु–निन्दायाम्, ईषदर्थे च ।

[1] यह स्वरादिगण–आकृतिगण हैं । अर्थात्–इस प्रकार के और भी शब्द शिष्टप्रयोग के प्रमाण से इस स्वरादि गण में जानना ।

च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् । भूयस् । कूपत् । कुवित् । नेत् । चेत् । चण् । कच्चित् । यत्र । नह । हन्त । माकिः । माकिम् । नकिः । नकिम् । माङ् । नञ् । यावत् । तावत् । त्वै । द्वै । [ न्वै ] । रै । श्रौषट् । वौषट् । स्वाहा । स्वधा । तुम् । तथाहि । खलु । किल । अथो । अथ । सुष्ठु । स्म । आदह ।

---

अञ्जसा—तत्त्वशीघ्रार्थयोः । मिथु—द्वावित्यर्थे । अस्तम्—विनाशे । स्थाने—युक्ते । वरम्—ईषदुत्कर्षे । सुदि—शुक्लपक्षे । वदि—कृष्णपक्षे । अनिशम्, नित्यं, सदा, अजस्रम्, सन्ततम्—एतत्पञ्चकं सातत्ये । आः—आश्चर्ये । इत्यादि ।

[ अथ निपाताः— ] च—समुच्चयाऽन्वाचयेतरेतरयोगसमाहारेषु । 'वा स्याद्विकल्पोपमयोरिवार्थे च समुच्चये' । ह—प्रसिद्धौ । अह—पूजायाम् । एव—अवधारणेऽनवक्लृप्तौ च । एवम्—उक्तपरामर्शे । नूनम्—निश्चये, वितर्के च । शश्वत्—पौनःपुन्ये, सहार्थे, नित्ये च । युगपत्—एककाले । भूयस्—पुनरर्थे, आधिक्ये च । कूपत्—प्रश्ने, प्रशंसायाञ्च । कुवित्—भूर्यर्थे, प्रशंसायाञ्च । नेत्—शङ्काप्रतिषेधविचारसमुच्चयेषु । चेत्—यदीत्यर्थे । चण्—चेदित्यर्थे । अत्र णकारोऽनुबन्धः । समुच्चयादौ तु निरनुबन्धकोऽयम् । कच्चित्—इष्टप्रश्ने । यत्र—अनवक्लृप्त्यमर्षगर्हाश्चर्येषु । नह—प्रत्यारम्भे । 'हन्त—हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' । माकिः, माकिम्, नकिः, नकिम्—चत्वारो वर्जने । केचित्तु नकिमिति न पठन्ति । माङ्—नञौ स्वरादिषूक्तावेव । उभयत्र तु पाठश्चिन्त्यफलः । यावत्, तावत्—एतौ साकल्याऽवधिमानावधारणेषु । त्वै—विशेषे, वितर्के च । द्वै—वितर्के । 'न्वै'—इति पाठान्तरम् । रै—दाने, आदरे च । श्रौषट्—वौषट्—हविर्दाने । स्वाहा—देवदाने । स्वधा—पितृदाने । स्वरभेदार्थं एषामुभयत्र पाठः । तुम्—तुङ्कारे । तथाहि—निदर्शने ( उदाहरणदाने ) । खलु—निषेधवाक्यालङ्कारनिश्चयेषु । किल—वार्त्तायामलीके च । अथो, अथ—मङ्गलानन्तरारम्भप्रश्नाधिकारप्रतिज्ञा—समुच्चयकार्त्स्न्येषु । अथशब्दः—स्वरादिष्वपि पठ्यते, तेन मङ्गलवाचकस्य सत्त्वार्थकत्वेऽप्यव्ययत्वं सिद्ध्यति । सुष्ठु—प्रशंसायाम् । अस्य स्वरभेदार्थं पुनः पाठः । स्म—अतीते, पादपूरणे च । आदह—उपक्रमहिंसाकुत्सनेषु ।

(ग) [1]उपसर्गविभक्तिस्वरप्रतिरूपकाश्च । अवदत्तम् । अहंयुः । अस्तिक्षीरा । अ । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु । शुकम् । यथाकथाच । पाट् । प्याट् । अङ्ग । है । हे । भोः । अये । द्य । विषु । एकपदे । युत् । आतः ॥ [2]चादिरप्याकृतिगणः ॥

[3]तद्धितश्चाऽसर्वविभक्तिः । १ । १ । ३८ ॥

यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात् । [ परिगणनं

---

उपसर्गेति । उपसर्गप्रतिरूपकाः, सुबन्तप्रतिरूपकाः, तिङन्तप्रतिरूपकाः, स्वरप्रतिरूपकाश्च ( निपातसञ्ज्ञकाः )—अव्ययसञ्ज्ञकाः स्युरित्यर्थः । तत्र-उपसर्गप्रतिरूपकोदाहरणम्—अवदत्तमिति । अत्राऽवेत्यस्योपसर्गत्वाऽभावेन 'अच उपसर्गात्तः' इति तादेशो न भवति । 'अह'मिति सुबन्तप्रतिरूपकमव्ययमहङ्कारे । अस्तीति तिङन्तप्रतिरूपकमव्ययम् । प्रथमान्तत्वे तु 'अहंशुभमो'रिति युसि विभक्तिलुकि-'अस्मद्यु'रिति स्यात् । 'अहंयु'रिति त्विष्यते । तिङन्तत्वे तु बहुव्रीहिसमासानुपपत्तिः । स्वरप्रतिरूपकाः—अ आ इ ई इत्यादयः । अ—सम्बोधनेऽधिक्षेपे, निषेधे च । आ—वाक्यस्मरणयोः । इ—सम्बोधने, विस्मये, जुगुप्सायाञ्च । ई उ ऊ ए ऐ ओ औ—सम्बोधने । पशु—सम्यगर्थे । शुकं-शैघ्र्ये । यथा—कथाच अनादरे ( किसी तरह से ) । पाट्प्रभृतयः सप्त सम्बोधने । द्य हिंसा-प्रातिलोम्य-पादपूरणेषु । विषु—नानार्थे । एकपदे—अकस्मादित्यर्थे । युत्—कुत्सायाम् । [ युदित्यन्ये पठन्ति ] । आतः—इतोऽपीत्यर्थे ।

आकृतीति । तद्यथा-यत्—तदिति द्वयं हेतौ । आहोस्वित्—विकल्पे । सीम्—सर्वतोभावे । सुकम्—अतिशये । अनुकं-वितर्के । शंवत्—अन्तःकरणे, आभिमुख्ये च । व—पादपूरणे, इवार्थे च । दिष्ट्या—आनन्दे । चटु—चाटु

---

१ उपसर्गप्रतिरूपक, सुबन्तप्रतिरूपक, तिङन्तप्रतिरूपक और स्वरप्रतिरूपक शब्दों की चादि गण में पाठ होने से अव्यय संज्ञा होती है । (प्रतिरूपक—सदृश) । २ यह चादि गण भी आकृतिगण है ।

३ जिस से सम्पूर्ण विभक्तियों की उत्पत्ति नहीं होती हो ऐसा जो तद्धितान्त शब्दस्वरूप, वह अव्ययसंज्ञक हो ।

कर्त्तव्यम् ]। 'तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । अम् । आम् । कृत्वोर्थाः । तसि-वती । ना-नाञौ'। एतदन्तमप्यव्ययम् । 'अत' इत्यादि ॥

[1]कृन्मेजन्तः । १ । १ । ३६ ॥

कृद्यो मान्त, एजन्तश्च, तदन्तमव्ययं स्यात्। स्मारं-स्मारम्। जीवसे। पिबध्यै॥

[2]क्त्वा-तोसुन्-कसुनः । १ । १ । ४० ॥

एतदन्तमव्ययं स्यात्। कृत्वा। उदेतोः। विसृपः॥

[3]अव्ययीभावश्च । १ । १ । ४१ ॥

[ अव्ययीभावोऽव्ययं स्यात् ] । अधिहरि ॥

[4]अव्ययादाप्सुपः । २ । ४ । ८२ ॥

---

एतौ प्रियवाक्ये। हुम्--भर्त्सने। इव--सादृश्ये। अद्यत्वे--इदानीमित्यर्थे इत्यादि। अत्र स्वरादिचाद्योराकृतिगणत्वाऽविशेषेऽपि, येषां निपातस्वर इष्टस्ते चादिषु, अन्ये स्वरादिषु, स्वरद्वयभाजस्तूभयत्र बोध्या इति विवेकः। एतदन्तमव्ययमिति। 'तद्धितश्चाऽसर्वविभक्ति' रित्यनेनेति भावः। 'यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्या'दिति च तदर्थः।

स्मारमिति। णमुलन्तोऽयम्। 'नित्यवीप्सयो'रिति द्वित्वम्।

जीवसे इति। 'तुमर्थे से-सेन्' इति 'असे'प्रत्ययश्छान्दसः।

पिबध्यै इति। 'तुमर्थे से-सेन' इति छान्दसः 'शध्यै' प्रत्ययः। शित्वात्, 'पाघ्राध्मे'ति पिबादेशः।

'उदेतो' रित्यत्र तोसुन्प्रत्ययः। विसृप इति। 'सृपितृदोः कसुन्' इति 'कसुन्'प्रत्ययः।

---

१ कृत् जो मान्त और एजन्त, तदन्त जो शब्द स्वरूप, उसकी अव्ययसञ्ज्ञा हो।

२ क्त्वा, तोसुन् और कसुन् प्रत्ययान्त जो शब्दस्वरूप उनकी 'अव्यय'सञ्ज्ञा हो।

३ अव्ययीभावसमास की अव्ययसञ्ज्ञा हो।

४ अव्यय से विहित जो आप् और सुप्, उनका लुक् हो।

अव्ययाद्विहितस्याऽऽपः सुपश्च लुक् स्यात् । तत्र शालायाम् ।

'सदृशं त्रिषु लिङ्गेषु, सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु, यन्न व्येति तदव्ययम् ॥
'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां, यथा-'वाचा' 'निशा' 'दिशा' ॥

वगाहः, अवगाहः । पिधानम्, अपिधानम् ॥

इत्यव्ययप्रकरणम् । इति पूर्वार्द्धम् ॥

---

## अथ तिङन्ते भ्वादिप्रकरणम् ।

लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् । एषु—पञ्चमो लकारश्छन्दोमात्रगोचरः ॥

[1]लः कर्मणि च, भावे चाऽकर्मकेभ्यः । ३ । ४ । ६९ ॥

---

तत्र इत्यत्र 'तद्धितश्चासर्वविभक्ति' रित्यव्ययसञ्ज्ञा ।

न व्येति—विविधं विकारं न प्राप्नोति । सत्त्वधर्मान् लिङ्गसङ्ख्यादीन् न गृह्णातीति यावत् ।

वष्टीति । भागुरिः—अवाप्योरुपसर्गयोरल्लोपं वष्टि । हलन्तानां=हलन्तेभ्यः, आपं=टापञ्च—वष्टि । वष्टि-इच्छति । हलन्तेभ्यष्टाप उदाहरणमाह—वाचेति । अत्र 'वगाहश्चावगाहश्च पिधानमपिधानक' मिति पठनीयम् । एकस्यांशस्य श्लोके उदाहरणमन्यस्य नेति वैषम्यस्याऽनुचितत्वात् ।

इत्यव्ययानि । ( इति पूर्वार्धम् ) ।

---

एषु—दशसु लकारेषु । पञ्चमः—लेट्लकारः । छन्दोमात्रगोचरः—वेद एव प्रयुज्यते, न तु लोके । ल इति । लः—प्रथमान्तं, कर्मणि—सप्तम्यन्तं, च—अव्ययपदं, भावे सप्तम्यन्तं, च—अव्ययपदम्, अकर्मकेभ्यः—पञ्चम्यन्तम् ।

---

१ सकर्मक धातुओं से कर्म और कर्ता में लकार हों-और अकर्मक धातुओं से भाव और कर्त्ता में लकार हों ।

लकाराः सकर्मकेभ्यः कर्मणि, कर्तरि च स्युरकर्मकेभ्यो भावे, कर्तरि च ॥

[1]वर्त्तमाने लट् । ३ । २ । १२३ ॥

वर्त्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ । उच्चारणसामर्थ्याल्लस्य नेत्त्वम् । भू सत्तायाम् ॥ १ ॥ कर्तृविवक्षायां भू ल इति स्थिते—

[2]तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-ताऽऽताञ्झ-थासाथां-ध्वमिड्वहिमहिङ् । ३ । ४ । ७८ ॥

एतेऽष्टादश लादेशाः स्युः ।

[3]लः परस्मैपदम् । १ । ४ । ९९ ॥

लादेशाः 'परस्मैपद'संज्ञाः स्युः ॥

[4]तङानावात्मनेपदम् । १ । ४ । १०० ॥

तङ् प्रत्याहारः, शानच्-कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञाऽपवादः ।

---

सकर्मकेभ्य इति । फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम् । फलसमानाधिकरणव्यापारवाचकत्वम् अकर्मकत्वम् । प्रारब्धाऽपरिसमाप्तक्रियाश्रयत्वं वर्त्तमानत्वम् । अटाविताविति । अकारः-'उपदेशेऽज्-' इत्यनेन, टकारः—'हलन्त्य' मित्यनेन इत्सञ्ज्ञको भवति, तेन 'तस्य लोपः' इति तयोर्लोप इत्याशयः ।

लस्येति । लस्य—'लशक्वतद्धिते' इत्यनेनेत्त्वं प्राप्नोति, तच्च उच्चारणसामर्थ्यान्न भवतीति भावः ।

---

१ वर्त्तमानकालिक जो क्रिया, तद्वृत्ति जो धातु, उससे लट् लकार हो ।

२ लकार के स्थान में तिबादि अठारह आदेश हों ।

३ लकार के स्थान में हुए जो आदेश, उनकी 'परस्मैपद'सञ्ज्ञा हो ।

४ तङ्प्रत्याहार, और शानच्, कानच्, इनकी 'आत्मनेपद' सञ्ज्ञा हो ।

**[1]अनुदात्त-ङित आत्मनेपदम् । १ । ३ । १२ ॥**

अनुदात्तेतो, ङितश्च धातोरात्मनेपदं स्यात् ॥

**[2]स्वरित-ञितः कर्त्रभिप्राये क्रियाफले । १ । ३ । ७२ ॥**

स्वरितेतो, ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले ॥

**[3]शेषात्कर्त्तरि परस्मैपदम् । १ । ३ । ७८ ॥**

आत्मनेपदनिमित्तहीनाद्धातोः कर्त्तरि परस्मैपदं स्यात् ।

**[4]तिङस्त्रीणि त्रीणि प्रथम-मध्यमो-त्तमाः । १ । ४ । १०१ ॥**

तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ॥

**[5]तान्येकवचन-द्विवचन-बहुवचनान्येकशः । १ । ४ । १०२ ॥**

लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि वचनानि प्रत्येकमेकवचनादिसंज्ञानि स्युः ॥

---

अनुदात्तेति । अनुदात्तश्च, ङश्च-अनुदात्तङौ, तावितौ यस्यासौ-अनुदात्तङित्, तस्मात्-'अनुदात्तङित्' इति विग्रहः । एवं 'स्वरितञित' इत्यत्रापि । कर्त्तारमभिप्रैतीति-कर्त्रभिप्रायं, तस्मिन्-कर्त्रभिप्राये । 'कर्मण्य'णित्यण् ।

तिङः षट् त्रिकाः, सञ्ज्ञास्तु तिस्र इति यथासङ्ख्यं न प्राप्नोतीत्यत्र आह—उभयोरिति । परस्मैपदमिति, आत्मनेपदमिति चानुवर्त्तते, तेन पदद्वये प्रत्येकं त्रयस्त्रिका इति यथासङ्ख्यं सञ्ज्ञाः प्रवर्त्तन्ते इति बोध्यम् ।

'तानी' त्यस्य व्याख्यानं-लब्धप्रथमेत्यादि । अन्यथैकसञ्ज्ञाधिकारात्प्रथमा-

---

१ अनुदात्तेत् जो धातु, और ङित् जो धातु, उनसे आत्मनेपद हो ।

२ स्वरितेत् जो धातु, और ञित् जो धातु, उनसे आत्मनेपद हो, कर्तृगामी क्रियाफल में । ( अर्थात् क्रियाजन्य फल यदि कर्ता को प्राप्त होता हो तो ) ।

३ आत्मनेपद के जो निमित्त, उनसे हीन जो धातु, उससे परस्मैपद हो, कर्तृगामी क्रियाफल में । ४ आत्मनेपद और परस्मैपद सम्बन्धी जो तीन तीन त्रिक, इनकी क्रम से प्रथम मध्यम-उत्तम पुरुष सञ्ज्ञा हो । ५ प्राप्त की है प्रथमपुरुषादि सञ्ज्ञा जिन्होंने, ऐसे जो तिङ्के तीन तीन वचन, उनकी क्रम से 'एकवचन' 'द्विवचन' 'बहुवचन' सञ्ज्ञा हो ।

[1]युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । १ । ४ । १०५ ॥

तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः स्यात् ॥

[2]अस्मद्युत्तमः । १ । ४ । १०७ ॥

तथाभूतेऽस्मद्युत्तमः स्यात् ॥

[3]शेषे प्रथमः । १ । ४ । १०८ ॥

मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू-ति इति जाते ।

[4]तिङ्-शित्सार्वधातुकम् । ३ । ४ । ११३ ॥

तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥

---

दिसञ्ज्ञानामेकवचनादिसञ्ज्ञानाञ्च पर्यायः स्यात् । तथा च अत्तेर्लोटो 'मेर्नि'—रिति कृते, एकत्वविवक्षायामुत्तमसञ्ज्ञाऽभावादाडुत्तमस्येत्याडनापत्त्या 'अन्नी'-त्यादिप्रयोगाणामप्यापत्तिः स्यात् ।

'समानाधिकरणे' इत्यत्र व्याख्यानं—तिङ्वाच्यकारकवाचिनीति । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः—सामानाधिकरण्यम् । 'स्थानिनी' त्यस्य व्याख्यानम्—'अप्रयुज्यमाने' इति । तथाभूत इति । तिङ्-वाच्यकारकवाचिनी अस्मदि प्रयुज्यमानेऽप्रयुज्यमाने 'च उत्तमः स्यादित्यर्थः ।

---

१ तिङ् वाच्य जो कारक, तादृश कारकवाची जो युष्मद् शब्द, वह य[illegible] प्रयुज्यमान हो, अथवा अप्रयुज्यमान भी हो, तो भी धातु से मध्यम पुरुष [illegible]

२ तिङ् वाच्य जो कारक, तादृश कारक-वाची जो अस्मद् शब्द, [illegible] प्रयुज्यमान हो, अथवा अप्रयुज्यमान भी हो, तो भी धातु से उत्तम पुरुष [illegible]

३ मध्यम और उत्तम का जहाँ विषय नहीं है, वहाँ प्रथम पुरुष हो। ( अर्थात् तिङ् वाच्य जो कारक, तादृश कारकवाची जो तदादि शब्द, वह प्रयु-ज्यमान हो, अथवा अप्रयुज्यमान हो, तो भी धातु से प्रथम पुरुष हो ) ।

४ धातु के अधिकार में पठित जो तिङ् और शित्सञ्ज्ञक प्रत्यय, उनकी 'सार्वधातुक' सञ्ज्ञा हो ।

[1]कर्त्तरि शप् । ३ । १ । ६८ ॥

कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् ॥

[2]सार्वधातुका-ऽऽर्द्धधातुकयोः । ७ । ३ । ८४ ॥

अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । अवादेशः । भवति । भवतः ।

[3]झोऽन्तः । ७ । १ । ३ ॥

प्रत्ययाऽवयवस्य झस्याऽन्तादेशः स्यात् । 'अतो गुणे' । भवन्ति । भवसि । भवथः । भवथ ॥

[4]अतो दीर्घो यञि । ७ । १ । १०१ ॥

अतोऽङ्गस्य दीर्घः स्याद्यञादौ सार्वधातुके । भवामि । भवावः । भवामः ।

स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः ॥

---

'सार्वधातुके' इत्यनुवर्त्तते, 'धातोरेकाच' इत्यतो 'धातो'रित्यनुवर्त्तते । तदाह—कर्त्रर्थे इति । झकारोत्तराऽकारः, तकारोत्तराऽकारश्च उच्चारणार्थः । 'अतो दीर्घो यञी'ति तु न प्रवर्त्तते, स्थान्यलादेशविधावनल्विधाविति स्थानिवत्त्वनिषेधात् । 'स भवति'इत्यादौ युष्मदस्मदोर्विषयस्याऽभावाच्छेषे प्रथम इति प्रथमः पुरुषः । —वं 'देवदत्तो भवति' 'चैत्रो भवति' 'भवान् भवती'—त्यादावपि प्रथमः 'त्वं भवसि'इत्यादौ च युष्मद्युपपदे मध्यमः । 'अहं भवामि'इत्यादौ —दुपपदे उत्तमः पुरुषः । यत्र च प्रथममध्यमयोरुभयोर्विषयः—'स च' त्वं च —वथः' इत्यादौ, तत्र तु परत्वान्मध्यम एव । यत्र च मध्यमोत्तमयोर्विषयस्तत्र 'त्वं-

---

१ कर्त्रर्थक सार्वधातुक परे रहते धातु से शप् प्रत्यय हो ।

२ इगन्त अङ्ग को गुण हो, सार्वधातुक और आर्धधातुक परे रहते ।

३ प्रत्यय का अवयव जो झकार, उसको 'अन्त' आदेश हो ।

४ अदन्त अङ्ग को दीर्घ हो, यञादि सार्वधातुक परे रहते ।

[1]परोक्षे लिट् । ३ । २ । ११५ ॥

भूताऽनद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः ॥

[2]परस्मैपदानां णलतुसुस्थलथुसणल्वमाः । ३ । ४ । ८२ ॥

लिटस्तिबादीनां नवानां णलादयो नव स्युः । भू अ इति स्थिते ।

[3]भुवो वुग् लुङ्-लिटोः । ६ । ४ । ८८ ॥

भुवो वुगागमः स्याल्लुङ्-लिटोरचि ॥

[4]लिटि धातोरनभ्यासस्य । ६ । १ । ८ ॥

लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तः, आदिभूतादचः परस्य तु द्वितीयस्य । भूव् भूव् अ इति स्थिते ॥

[5]पूर्वोऽभ्यासः । ६ । १ । ४ ॥

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् ॥

[6]हलादिः शेषः । ७ । ४ । ६० ॥

अभ्यासस्याऽऽदिर्हल् शिष्यते, अन्ये हलो लुप्यन्ते । इति वलोपः ।

---

त्वाऽहञ्च पठाव' इत्यत्रोत्तम एव । यत्र च सर्वेषां प्रथममध्यमोत्तमानां विषयस्तत्र—'स च' त्वं चाहञ्च भोक्ष्यामहे' इत्यादौ, तत्र च परत्वादुत्तमः पुरुष एवेति विवेकः । अत्र='एकाचो द्वे प्रथमस्ये'ति ( ६ । १ । १ ) षाष्ठप्रकरणे । अभ्यासस्येति । अभ्यासस्येति जातिपरो निर्देशः, तेन आदेर्हलोऽभावेऽपि 'आततुः' 'आप्तुः' इत्यादौ तकारादिनिवृत्तिः सिद्ध्यति ।

---

१ भूत अनद्यतन परोक्षार्थ वृत्ति जो धातु, उससे लिट् लकार हो ।

२ लिट् के स्थान में जो तिबादि नौ, उनको णलादि नौ आदेश हों ।

३ भूधातु को वुक् का आगम हो, लुङ् लिट् सम्बन्धी अच् परे रहते ।

४ अभ्यास रहित धातु का अवयव जो प्रथम एकाच्, उसको द्वित्व हो, यदि आदि भूत अच् हो तो उससे परे जो द्वितीय एकाच् उसको द्वित्व हो ।

५ षाष्ठद्वित्वप्रकरण में जो दो विधान किए हैं, उनमें से पूर्व की अभ्यास संज्ञा हो । ६ अभ्यास का आदि हल् शेष रहे, और अन्य हल् का लोप हो ।

सुपो लुक्। परार्थाभिधानं वृत्तिः। कृत्तद्धित-समासैकशेष-सनाद्यन्तधातुरूपाः पञ्च वृत्तयः। वृत्त्यर्थाऽवबोधकं वाक्यं विग्रहः। स च लौकिकोऽलौकिकश्चेति द्विधा। तत्र-'पूर्वं भूत' इति लौकिकः। पूर्व अम् भूत सु इत्यलौकिकः। भूतपूर्वः। 'भूतपूर्वे चर'डिति निदशाद्भूतशब्दस्य पूर्वनिपातः।

* [1]इवेन समासो, विभक्त्यलोपश्च। वागर्थौ इव-वागर्थाविव॥

इति केवलसमासः॥ १॥



## अथाव्ययीभावसमासः।

[2]अव्ययीभावः। २। १। ५॥

अधिकारोऽयं, प्राक् तत्पुरुषात्॥

अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्य-र्थाभावा-
ऽत्यया-ऽसम्प्रति-शब्दप्रादुर्भाव-पश्चा-द्यथा-ऽऽनु-

सुपो लुक्='सुपो धातुप्रातिपदिकयो'रिति सुपो लुक्। परार्थेति। परस्य शब्दस्य योऽर्थस्तस्य शब्दान्तरेण यत्राऽभिधानं सा वृत्तिरित्यर्थः। यथा 'राजपुरुष' इत्यत्र राजशब्देन वाक्यावस्थायामनुक्तः पुरुषशब्दार्थः समासेऽभिधीयते इति भवति सा वृत्तिः। अन्ये तु प्रत्ययार्थान्तर्भावेण, परपदार्थान्तर्भावेण वा यो विशिष्टोऽर्थः स परार्थः, सोऽभिधीयते येन तत्परार्थाभिधानमित्यर्थमाहुः।

वृत्त्यर्थेति। वृत्त्यर्थविषयकबोधजनकमित्यर्थः। लोकेऽर्थबोधनेच्छया प्रयुज्यमानो लौकिकः। लोकेऽर्थबोधनेच्छयाऽप्रयुज्यमानः, शास्त्रप्रक्रियामात्रोपयोगी च अलौकिकः। पूर्वनिपातः=भूतशब्दस्य पूर्वनिपातः।

❀ इति केवलसमासः ❀

अव्ययीभाव इति। अत्र अव्ययमिति योगो विभज्यते। अव्ययं समर्थेन सह समस्यते सोऽव्ययीभाव इति च तदर्थः।

१ इव के साथ समास हो और विभक्ति का अलोप हो।

२ 'तत्पुरुषः' इस सूत्र से पूर्व तक अव्ययीभाव का अधिकार है।

[1]पूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्या-ऽन्तवचनेषु । २ । १ । ६ ॥

विभक्त्यर्थादिषु वर्त्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते, सोऽव्ययीभावः। प्रायेणाऽविग्रहो नित्यसमासः, प्रायेणाऽस्वपदविग्रहो वा । विभक्तौ–'हरि ङि अधि' इति स्थिते ॥

[2]प्रथमानिर्दिष्टं समास उपसर्जनम् । १ । २ । ४३ ॥

समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥

[3]उपसर्जनं पूर्वम् । २ । २ । ३० ॥

समासे उपसर्जनं प्राक्प्रयोज्यम् । इत्यधेः प्राक् प्रयोगः । सुपो लुक् । एकदेशविकृतस्याऽनन्यत्वात्प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः ।'अव्ययीभावश्चे'-त्यव्ययत्वात्सुपो लुक् । अधिहरि ॥

---

अस्य च अपदिशमित्युदाहरणम्। दिशयोर्मध्ये इति च विग्रहः। अविग्रहः= लौकिकविग्रहरहितः। समस्यमानयावत्पदाऽघटित इत्यर्थः। 'विभक्तौ'–इत्यस्य 'उदाहरण'मिति शेषः। 'अधी'त्यस्य च विभक्त्यर्थेऽधिकरणे वर्त्तमानतया हरिशब्देन समासः।

समासशास्त्र इति। यथा—रकृते समासशास्त्रम्—'अव्ययं विभक्ती'ति, तत्र प्रथमानिर्दिष्टम्–'अव्यय'मिति, तदुपसर्जनसञ्ज्ञमित्यधीत्यस्योपसर्जनसञ्ज्ञा भवति।

प्राक् प्रयोगः–तस्य समाससञ्ज्ञाविधायकशास्त्रघटकप्रथमान्तपदजन्यबोधविषयतयोपसर्जनत्वादुपसर्जनं पूर्वमिति शास्त्रेण हरिशब्दात्प्राक् प्रयोगः।

---

१ विभक्त्यादि अर्थ में वर्त्तमान जो अव्यय वह सुबन्त के साथ नित्यसमास को प्राप्त हो, और वह समास अव्ययीभावसंज्ञक हो।

२ समासशास्त्र में जो प्रथमा निर्दिष्ट है, उसकी उपसर्जन संज्ञा हो।

३ समास में उपसर्जन का पूर्वनिपात हो।

[1]अव्ययीभावश्च । २ । ४ । १८ ॥

अयं नपुंसकं स्यात् ॥

[2]नाऽव्ययीभावादतोऽम्त्वपञ्चम्याः । २ । ४ । ८३ ॥

अदन्तादव्ययीभावात्सुपो न लुक्, तस्य तु पञ्चमीं विना अमादेशश्च स्यात् ॥ गाः पातीति गोपाः, तस्मिन्नित्यधिगोपम् ॥

[3]तृतीया-सप्तम्योर्बहुलम् । २ । ४ । ८४ ॥

अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । अधिगोपम् । अधिगोपेन, अधिगोपे वा । कृष्णस्य समीपम्—उपकृष्णम् । मद्राणां समृद्धिः—सुमद्रम् । यवनानां व्यृद्धिर्दुर्यवनम् । मक्षिकाणामभावो—निर्मक्षिकम् । हिमस्याऽत्ययोऽतिहिमम् । निद्रा सम्प्रति न युज्यते इत्यतिनिद्रम् । हरिशब्दस्य प्रकाशः—इतिहरि । विष्णोः पश्चादनुविष्णु । योग्यता-वीप्सा-पदार्थाऽनतिवृत्ति-सादृश्यानि—यथार्थाः । रूपस्य योग्यम्—

---

प्रातिपदिकेति । कृत्तद्धितसमासाश्चेति प्रातिपदिकसञ्ज्ञायामित्यर्थः । तस्मिन् = गोपि । तृतीया–सप्तम्योः क्रमशः–अधिगोपम्, अधिगोपेन । अधिगोपम्, अधिगोपे इति रूपाणि ।

उपकृष्णेति । 'अत्र सर्वत्र यथायथं–'कृष्ण ङस् उपे'त्यलौकिकविग्रहः । 'मद्र आम्–सु' इत्यलौकिकविग्रहः । 'यवन आम् दुर्' इत्यलौकिकविग्रहः । 'मक्षिका आम् निर्' इत्यलौकिकं वाक्यम् । 'हिम ङस् अति' इत्यलौकिकं वाक्यम् । 'निद्रा ङस् अति' इत्यलौकिकं वाक्यम् । 'हरि ङस् इति' इत्यलौकिकं वाक्यम् । एवं 'विष्णु अस् अनु' । 'रूप–ङस्–अनु' । 'अर्थ–अम् प्रति' । 'शक्ति ङस्

---

१ अव्ययीभावसमास नपुंसक लिङ्ग में हो ।

२ अदन्त अव्ययीभाव समास से परे सुप् का लुक् नहीं हो, किन्तु उसको अम् आदेश हो, पञ्चमी विभक्ति को छोड़कर ।

३ अदन्त अव्ययीभाव से परे तृतीया और सप्तमी को बहुलता ( विकल्प ) करके अम्-भाव ( अम् आदेश ) हो ।

अनुरूपम् । अर्थमर्थं प्रति-प्रत्यर्थम् । शक्तिमनतिक्रम्य-यथाशक्ति ॥

[1]अव्ययीभावे चाऽकाले । ६ । ३ । ८१ ॥

सहस्य सः स्यादव्ययीभावे, न तु काले । हरेः सादृश्यं-सहरि । ज्येष्ठस्याऽऽनुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपत्-सचक्रम् । सदृशः सख्या-ससखि । क्षत्राणां सम्पत्तिः—सक्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । अग्निग्रन्थपर्यन्तमधीते—साऽग्नि ॥

[2]नदीभिश्च । २ । १ । २० ॥

नदीभिः सह संख्या समस्यते । * समाहारे चाऽयमिष्यते । पञ्चगङ्गम् । द्वियमुनम् ॥

[3]तद्धिताः । ४ । १ । ७६ ॥

आ पञ्चमसमाप्तेरधिकारोऽयम् ॥

[4]अव्ययीभावे शरत्प्रभृतिभ्यः । ५ । ४ । १०७ ॥

शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे । शरदः समीपम्-

---

यथा' इत्यलौकिकं वाक्यम् ।

सहरीत्यादौ च 'हरि—टा—सह' । 'ज्येष्ठ ङस् अनु' । 'चक्र, टा सह' । 'सखि टा सह' । 'क्षत्र ङस् सह' । 'तृण टा सहे'त्यलौकिकं वाक्यं यथायथं बोध्यम् । साऽग्नीति—'अग्नि टा सहे'त्यलौकिकम् ।

अयं = 'नदीभिश्चे'ति समासः । पञ्चानां गङ्गानां समाहारः—पञ्चगङ्गम् । द्वियमुनमिति । द्वयोर्यमुनयोः समाहार इति विग्रहः । 'पञ्चन् जस् गङ्गा जस्'इति, द्वि-औ

---

१ सह को स आदेश हो अव्ययीभाव समास में, परन्तु काल में नहीं हो ।
२ नदीवाचक समर्थ सुबन्त के साथ संख्यावाचक समास को प्राप्त हो ।
३ पञ्चमाध्याय की समाप्तिपर्यन्त तद्धित इसका अधिकार है ।
४ शरदादिगणपठित शब्दों से समासान्त टच् प्रत्यय हो अव्ययीभाव में ।

उपशरदम् । प्रतिविपाशम् । *(ग)जराया जरश्च । उपजरसमित्यादि ॥

[1]अनश्च । ५ । ४ । १०८ ॥

अन्नन्तादव्ययीभावाट्टच् स्यात् ॥

[2]नस्तद्धिते । ६ । ४ । १४४ ॥

नान्तस्य भस्य टेर्लोपः स्यात्तद्धिते । उपराजम् । अध्यात्मम् ॥

[3]नपुंसकादन्यतरस्याम् । ५ । ४ । १०९ ॥

अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात् । उपचर्मम् । उपचर्म ॥

[4]झयः । ५ । ४ । १११ ॥

झयन्तादव्ययीभावाट्टज्वा स्यात् । उपसमिधम् । उपसमित् ॥

इत्यव्ययीभावः ॥ २ ॥

---

यमुना आ' इति चाऽलौकिकविग्रहः । उपशरदमिति । 'शरद् अस् उपे'त्यलौकिकं वाक्यम् । सामीप्येऽव्ययीभावः । विपाशं विपाशं प्रतीति प्रतिविपाशमित्यत्र वीप्सायामव्ययीभावः । 'विपाश्–अम्–प्रति'इत्यलौकिकं वाक्यम् । विपाट्–नदी–विशेषः । (व्यासनदी-पंजाब) । जरसः समीपम्–उपजरसम् । एवं-'उपराजम्' 'उपसमिध'मित्यादि बोध्यम् । 'आत्मनी'त्यध्यात्मम् । विभक्त्यर्थेऽव्ययीभावः ।

❋ इत्यव्ययीभावसमासः ❋

---

१ अन्नन्त अव्ययीभाव से समासान्त टच् प्रत्यय हो ।

२ नान्त भसंज्ञक की टि का लोप हो, तद्धित परे रहते ।

३ अन्नन्त जो क्लीब, तदन्त जो अव्ययीभाव, उससे टच् हो, विकल्प करके ।

४ झयन्त अव्ययीभाव से समासान्त टच् प्रत्यय हो विकल्प करके ।

# अथ तत्पुरुषः ।

[1]तत्पुरुषः । २ । १ । २२ ॥

अधिकारोऽयं प्राग्बहुव्रीहेः ॥

[2]द्विगुश्च । २ । १ । २३ ॥

द्विगुरपि तत्पुरुषसंज्ञकः स्यात् ॥

[3]द्वितीया श्रिता-ऽतीत-पतित-गता-ऽत्यस्त-प्राप्ता-ऽऽपन्नैः । २ । १ । २४ ॥

द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते, स च तत्पुरुषः । कृष्णं श्रितः-कृष्णश्रित इत्यादि ॥

[4]तृतीया तत्कृताऽर्थेन गुणवचनेन । २ । १ । ३० ॥

तृतीयान्तं तृतीयान्ताऽर्थकृतगुणवचनेनाऽर्थेन च सह वा प्राग्वत् । शङ्कुलया खण्डः शङ्कुलाखण्डः । धान्येनाऽर्थो धान्यार्थः । तत्कृतेति किम् ? । अक्ष्णा काणः ॥

[5]कर्त्तृ-करणे कृता बहुलम् २ । १ । ३२ ॥

---

प्रागिति । 'शेषो बहुव्रीहि'रित्यतः प्रागित्यर्थः । तत्कृतेति लुप्ततृतीयाकम् । तत्पदेन द्वितीयान्तार्थो गृह्यते । अत्र च वाक्यद्वयम् । 'तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेन सह वा समस्यते' इत्येकं वाक्यम् । 'तृतीयान्तमर्थशब्देन सह समस्यते' इत्यपरं वाक्यम् ।

---

१ 'शेषो बहुव्रीहिः' इसके पूर्व तक तत्पुरुष का अधिकार है ।

२ द्विगु की भी तत्पुरुष-संज्ञा हो ।

३ द्वितीयान्त, श्रितादिप्रकृतिक सुबन्तसमर्थ के साथ विकल्पकरके समास को प्राप्त हो, और वह समास तत्पुरुषसंज्ञक हो ।

४ तृतीयान्त ( जो है सो ) तृतीयान्तार्थकृत गुणवचन के साथ और अर्थ शब्द के साथ समास को प्राप्त हो, वह समास तत्पुरुषसंज्ञक हो । ५ कर्त्ता में एवं करण में जो तृतीया वह कृदन्त के साथ बहुलता से समास को प्राप्त हो ।

कर्त्तरि, करणे च तृतीया कृदन्तेन बहुलं प्राग्वत्। हरिणा त्रातो-हरित्रातः। नखैर्भिन्नो-नखभिन्नः। (प.) कृद्ग्रहणे गतिकारक-पूर्वस्यापि ग्रहणम्। नखनिर्भिन्नः॥

[1]चतुर्थी तदर्था-ऽर्थ-बलि-हित-सुख-रक्षितैः। २। १। ३६॥

चतुर्थ्यन्तार्थाय यत्तद्वाचिना, अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्। यूपाय दारु-यूपदारु। *[2]तदर्थेन प्रकृतिविकृतिभाव एवेष्टः। तेनेह न-रन्धनाय स्थाली। *[3]अर्थेन नित्यसमासो, विशेष्यलिङ्गता चेति वक्तव्यम्। द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः।

---

प्राग्वत्=समस्यते स तत्पुरुषः। हरिणेति कर्त्तरि तृतीया। नखैरिति च करणे तृतीया। ननु प्रत्ययग्रहणपरिभाषया कृदन्ततदादेरेव ग्रहणाद्भि-न्नादिपदैर्नखादिशब्दानां समासेऽपि निर्भिन्नादिशब्दैः सह तेषां समासो न स्यादत आह—कृद्ग्रहण इति। एवञ्च 'नि'रित्युपसर्गस्य गतिश्चेति गतित्वेन तत्पूर्व-स्यापि 'निर्भिन्न' इत्यस्य कृदन्तत्वेन ग्रहणात्समाससिद्धिः। 'तदर्थे'ति लुप्त-तृतीयान्तम्। यूपदार्वित्यत्र—चतुर्थ्यन्तं यूपायेति, तदर्थो यज्ञस्तम्भरूपः, तदर्थं यत्-(दारु) काष्ठं, तद्वाचकः शब्दो दारुशब्दः, तेन सह चतुर्थ्यन्तस्य यूपशब्दस्य समास इत्याशयः। तदर्थेति। तदर्थपदेन च प्रकृतिविकृतिभाव एवेह ग्राह्यः, यथा दारुयूपयोरस्ति प्रकृतिविकृतिभावः। दारुणा हि प्रकृतिभूतेन यूपो निर्मीयते। यत्र तु प्रकृतिविकृतिभावो नास्ति तत्र नाऽनेन समासः। यथा—रन्धनाय स्थालीति। अत्र हि रन्धनस्थाल्योर्न प्रकृतिविकृतिभावः।

विशेष्यलिङ्गता = विशेष्यशब्दलिङ्गानुसारेणैव लिङ्गमत्र भवति। यथा द्विजार्था यवागूरित्यत्र यवागूशब्दस्य विशेष्यस्य स्त्रीलिङ्गतया द्विजार्थेत्यत्रापि

---

१ चतुर्थ्यन्तार्थ के वास्ते जो है, तद्वाचक के साथ, और अर्थादि के साथ चतुर्थ्यन्त का समास हो, विकल्प करके, और वह समास तत्पुरुषसञ्ज्ञक हो।

२ तदर्थ करके प्रकृतिविकृतिभाव ही लिया जाता है।

३ अर्थ के साथ नित्य समास हो, और विशेष्यलिङ्गता भी हो।

भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्॥

[1]पञ्चमी भयेन। २। १। ३७॥

चोराद्भयम्-चोरभयम्॥

[2]स्तोका-न्तिक-दूरार्थ-कृच्छ्राणि क्तेन। २। १। ३९॥

[3]पञ्चम्याः स्तोकादिभ्यः। ६। ३। २॥

[ स्तोकादिभ्यः पञ्चम्या ] अलुगुत्तरपदे। स्तोकान्मुक्तः। अन्तिकादागतः। अभ्यासादागतः। दूरादागतः। कृच्छ्रादागतः॥

[4]षष्ठी। २। २। ८॥

[ षष्ठ्यन्तं ] सुबन्तेन प्राग्वत्। राजपुरुषः॥

[5]पूर्वा-ऽपरा-ऽधरो-त्तरमेकदेशिनैकाधिकरणे। २। २। १॥

---

स्त्रीलिङ्गतेति भावः। अर्थशब्दस्य नित्यपुंस्त्वात् 'परवल्लिङ्ग'मिति सूत्रादत्र नित्यपुंल्लिङ्गता प्राप्ता, तद्बाधनाय च विशेष्यलिङ्गतोक्तिः।

भूताय बलिः-भूतबलिः। गवे हितं गोहितम्। पञ्चमीति। पञ्चम्यन्तं भयप्रकृतिकेन सुबन्तेन सह वा समस्यते स तत्पुरुषः। स्तोकेति। स्तोकाद्यर्थकप्रकृतिकपञ्चम्यन्तं, कृच्छ्रप्रकृतिकपञ्चम्यन्तं च क्तान्तप्रकृतिकेन सुबन्तेन सह वा समस्यते स तत्पुरुष इत्यर्थः। पञ्चम्या इति। एभ्यः पञ्चम्या अलुगुत्तरपदे इत्यर्थः।

षष्ठीति। षष्ठ्यन्तं, सुबन्तेन सह वा समस्यते स तत्पुरुष इत्यर्थः।

पूर्वापरेति। एकदेशिशब्दोऽवयविवाची, एकदेशशब्दस्याऽवयवे रूढ-

---

१ पञ्चम्यन्त—भयप्रकृतिक सुबन्त समर्थ के साथ समास को प्राप्त हो, विकल्प करके।

२ स्तोकाद्यर्थकप्रकृतिकपञ्चम्यन्त और कृच्छ्रप्रकृतिकपञ्चम्यन्त क्तान्तप्रकृतिक सुबन्त के साथ समास को प्राप्त हो विकल्प करके और वह समास तत्पुरुषसंज्ञक हो।

३ स्तोकादिक से परे जो पञ्चमी उसका अलुक् हो, उत्तरपद परे रहते।

४ षष्ठ्यन्त प्रातिपदिक-सुबन्त के साथ समास को प्राप्त हो विकल्प से।

५ अवयवी वाचक के साथ पूर्वादि का समास हो, वह अवयवी यदि एकत्वसंख्या विशिष्ट हो तो।

अवयविना सह पूर्वादयः समस्यन्ते, एकत्वसंख्याविशिष्टश्चेदवयवी। षष्ठीसमासापवादः। पूर्वं कायस्य—पूर्वकायः। अपरकायः। एकाधिकरणे किम्?। पूर्वश्छात्राणाम्॥

[1]अर्धं नपुंसकम्। २। २। २॥

समांऽशवाच्यर्धशब्दो नित्यं क्लीबे, स प्राग्वत्। अर्धं पिप्पल्याः—अर्धपिप्पली॥

[2]सप्तमी शौण्डैः। २। १। ४०॥

सप्तम्यन्तं शौण्डादिभिः प्राग्वत्। अक्षेषु शौण्डः—अक्षशौण्ड इत्यादि। 'द्वितीया'-'तृतीये' त्यादियोगविभागादन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः॥

[3]दिक्संख्ये संज्ञायाम्। २। १। ५०॥

'संज्ञायामेवे'ति नियमार्थं सूत्रम्। पूर्वेषुकामशमी। सप्तर्षयः।

---

त्वात्। 'एकाधिकरणे' इत्यस्यार्थमाह—एकत्वेति। अवयविनि—एकाधिकरणे=एकत्वसङ्ख्याविशिष्टे सतीत्यर्थः। नन्विदं सूत्रं व्यर्थं, कर्मधारयेणैव सिद्धेः, ऊर्ध्वकायवदत आह—षष्ठीसमासापवाद इति। एवञ्च 'कायपूर्व' इत्यादिरूपनिरासाय किलेदं सूत्रमित्याशयः। नित्यमिति। 'पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरोक्तेः। 'अर्धपिप्पली'त्यत्र परवल्लिङ्गत्वात्स्त्रीत्वम्।

शौण्डः=कुशलः। 'द्वितीयाश्रिते'त्यत्र तत्पुरुषे द्वितीयेति, 'तृतीया तत्कृते'त्यत्र तृतीयेति, 'चतुर्थी तदर्थे'त्यादौ च चतुर्थीत्यादीनां योगविभागादित्यर्थः। अन्यत्र=पूर्वोक्तसूत्रोक्तातिरिक्तस्थलेऽपि।

---

१ नपुंसक लिङ्ग में नित्य वर्त्तमान जो समअंशवाची अर्धशब्द, वह अवयविवाचक समर्थ सुबन्त के साथ समास को प्राप्त हो, विकल्प करके।

२ सप्तम्यन्त,—शौण्डादिप्रकृतिक समर्थ सुबन्त के साथ समास को प्राप्त हो।

३ दिग्वाचक और संख्यावाचक जो शब्द उनका यदि तत्पुरुष समास हो तो संज्ञा में ही हो, अन्यत्र नहीं हो।

तेनेह न—उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ॥

[1]तद्धितार्थो-त्तरपद-समाहारे च । २ । १ । ५१ ॥

तद्धितार्थे विषये, उत्तरपदे च परतः, समाहारे च वाच्ये दिक्सङ्ख्ये प्राग्वत् । पूर्वस्यां शालायां भवः ।

पूर्वा-शाला इति समासे जाते—*सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ।

[2]दिक्पूर्वपदादसंज्ञायां ञः । ४ । २ । १०७ ॥

अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम् ॥

[3]तद्धितेष्वचामादेः । ७ । २ । ११७ ॥

ञिति, णिति च तद्धितेऽचामादेरचो वृद्धिः स्यात् । यस्येति च । पौर्वशालः ॥ पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ—

*[4]द्वन्द्व-तत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् ॥

---

उत्तरा वृक्षा इति । अत्र हिसञ्ज्ञाया अभावान्न समासः । वृत्तिमात्रे=तद्धितवृत्तौ, समासवृत्तौ च । यद्यपि 'स्त्रियाः पुंव'दिति सूत्रेणापीदं रूपं सिध्यति, तथापि प्रतिपदोक्तत्वादिह तदुपन्यासः ।

आदेरच इति । आदिरच् प्रकृते पकारोत्तरोकारः ।

पूर्वा ङि—शाला ङि—इत्यत्र भवरूपतद्धितार्थस्य विषयतया—'तद्धितार्थे'ति समासे, पुंवत्त्वे, 'पूर्व-शाला' इति जाते—'दिक्पूर्वपदा'दिति ञप्रत्यये, आदिवृद्धौ, यस्येति लोपे, तद्धितान्ततया प्रातिपदिकत्वे, स्वाद्युत्पत्तौ, रुत्वे, विसर्गे च, पौर्वशाल' इति सिध्यति । अत्र अवान्तरतत्पुरुषस्य महाविभाषया विकल्पे

---

१ तद्धितार्थ के विषय में, उत्तरपद परे रहते, और समाहार यदि वाच्य हो तो दिग्वाचक और संख्यावाचक सुबन्त—समर्थ के साथ समास को प्राप्त हों ।

२ दिक्पूर्वपद में है जिसके ऐसा जो समास उसमें भवाद्यर्थ में ञ प्रत्यय हो, असंज्ञा में ।

३ ञित् और णित् तद्धित परे रहते अचों के आदि अच् को वृद्धि हो ।

४ उत्तरपद परे रहते द्वन्द्व और तत्पुरुष समास नित्य हों ।

[1]गोरतद्धितलुकि । ५ । ४ । ९२ ॥

गोऽन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो, न तु तद्धितलुकि। पञ्चगवधनः।

[2]तत्पुरुषः समानाधिकरणः कर्मधारयः । १ । २ । ४२ ॥

[3]संख्यापूर्वो द्विगुः । २ । १ । ५२ ॥

'तद्धितार्थे'त्यत्रोक्तस्त्रिविधः सङ्ख्यापूर्वो द्विगुसंज्ञः स्यात् ॥

[4]द्विगुरेकवचनम् । २ । ४ । १ ॥

द्विग्वर्थः समाहार एकवत्स्यात् ॥

[5]स नपुंसकम् । २ । ४ । १७ ॥

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। पञ्चानां गवां समाहारः—पञ्चगवम् ॥

---

उत्तरपदे परतो द्वन्द्वस्य तत्पुरुषस्य च विकल्पो न भवतीत्यर्थकं वचनं—द्वन्द्वतत्पुरुषयोरिति। विकल्पे तु तत्पुरुषप्रयुक्तटजभावे 'पञ्चगोधन' इत्यनिष्टं रूपमपि स्यादित्याशयः।

तत्पुरुष इति। समानाधिकरणशब्दोऽत्रार्शआद्यजन्तः। समानाधिकरणपदकस्तत्पुरुषः कर्मधारयसंज्ञको भवतीत्यर्थः। समानविभक्तिकतया च सामानाधिकरण्यम्।

पञ्चगवमित्यत्र तद्धितार्थेति समासः। विशेषणं = भेदकम्। यथा नीलादि-

---

१ गोशब्दान्त तत्पुरुष से समासान्त टच् प्रत्यय हो, तद्धित का यदि लुक् नहीं हुवा हो तो।

२ संख्यापूर्वक तत्पुरुष की द्विगुसंज्ञा हो।

३ समानाधिकरणपदक जो तत्पुरुष उसकी कर्मधारयसंज्ञा हो।

४ द्विग्वर्थ जो समाहार वह एकवत् हो।

५ समाहार में जो द्विगु और द्वन्द्व वह नपुंसकलिङ्ग में हो।

[1]विशेषणं विशेष्येण बहुलम् । २ । १ । ५७ ॥

भेदकं समानाधिकरणेन भेद्येन बहुलं प्राग्वत् । नीलमुत्पलं, नीलोत्पलम् । बहुलग्रहणात्क्वचिन्नित्यम्-कृष्णसर्पः । क्वचिन्न-रामो जामदग्न्यः ।

[2]उपमानानि सामान्यवचनैः । २ । १ । ५५ ॥

घन इव श्यामो-घनश्यामः । ❀[3]शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् । शाकप्रियः पार्थिवः-शाकपार्थिवः । देवपूजको ब्राह्मणो-देवब्राह्मणः ॥

[4]नञ् । २ । २ । ६ ॥

नञ् सुपा सह समस्यते ॥

[5]नलोपो नञः । ६ । ३ । ७३ ॥

नञो नस्य लोपः स्यादुत्तरपदे । न ब्राह्मणः-अब्राह्मणः ॥

[6]तस्मान्नुडचि । ६ । ३ । ७४ ॥

---

पदम् । विशेष्यं=भेद्यम् । यथा-उत्पलादिकम् । समानाधिकरणेन=समानविभक्तिकेन । बहूनार्थात् लातीति—बहुलम् । बाहुल्यञ्च यथेच्छं लक्ष्यानुरोधात् प्रवृत्तिः । घन इवेति । अत्र घनशब्द उपमानवाचकः, श्यामशब्दश्च सामान्यधर्मवचनः । उत्तरपदलोपस्य=मध्यमपदलोपस्य । तेनाऽत्र प्रियपूजकादिमध्यमपदानां लोपः सिध्यति ।

---

१ भेदक ( विशेषण )—समानाधिकरण भेद्य ( विशेष्य ) के साथ बहुलता करके समास को प्राप्त हो ।

२ उपमान वाचक,-सामान्यवचन के साथ समास को प्राप्त हो ।

३ शाकपार्थिवादि के सिद्धि के लिये उत्तरपद का लोप हो ।

४ नञ् , समर्थ सुबन्त के साथ समास को प्राप्त हो, विकल्प करके ।

५ नञ् के नकार का लोप हो, उत्तरपद परे रहते ।

६ लुप्त हुवा है नकार जिसका ऐसा जो नञ् , उससे परे जो अजादि उत्तरपद, उसको नुट् का आगम हो ।

लुप्तनकारान्नञ उत्तरपदस्याऽजादेर्नुडागमः स्यात् । अनश्वः । 'नैकधे'त्यादौ तु 'न'शब्देन सह 'सुप्सुपे'ति समासः ॥

[1]कु-गति-प्रादयः । २ । २ । १८ ॥

एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः-कुपुरुषः ॥

[2]ऊर्यादि-च्वि-डाचश्च । १ । ४ । ६१ ॥

ऊर्यादयश्च्व्यन्ता, डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य । सुपुरुषः ॥ *[3]प्रादयो गताद्यर्थे प्रथमया । प्रगत आचार्यः-प्राचार्यः । *[4]अत्यादयः क्रान्ताद्यर्थे द्वितीयया । 'अतिक्रान्तो माला'मिति विग्रहे—

[5]एकविभक्ति चाऽपूर्वनिपाते । १ । २ । ४४ ॥

विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः ॥

[6]गो-स्त्रियोरुपसर्जनस्य । १ । २ । ४८ ॥

उपसर्जनं यो गोशब्दः, स्त्रीप्रत्ययान्तञ्च, तदन्तस्य प्रातिपदिकस्य

---

नैकधेत्यत्र न नञ्शब्दः, किन्तु 'न'शब्द इति नात्र नलोपादेः प्रसङ्गः, नञोऽभावात् । एवञ्च नञ्शब्देन समासे तु अनेकधेति रूपं भवत्येवेति ध्येयम् ।

प्राचार्यः । गुरोरपि गुरुरित्यर्थः ।

---

१ कु और गतिसंज्ञक और प्रादि ये समर्थ सुबन्त के साथ समास को प्राप्त हों ।

२ ऊर्यादि और च्व्यन्त और डाजन्त इनकी क्रिया के योग में गतिसंज्ञा हो ।

३ प्रादि, गत आदि अर्थों में प्रथमान्त के साथ समास को प्राप्त हों ।

४ अत्यादि, क्रान्ताद्यर्थ में द्वितीयान्त के साथ समास को प्राप्त हों ।

५ विग्रह में जो नियतविभक्तिक उसकी उपसर्जन संज्ञा हो, किन्तु उसका पूर्वनिपात नहीं हो ।

६ उपसर्जन जो गोशब्द और स्त्रीप्रत्ययान्त, तदन्त प्रातिपदिक को ह्रस्व हो ।

ह्रस्वः स्यात् । अतिमालः । ❀[1]अवादयः क्रुष्टाद्यर्थे तृतीयया । अवक्रुष्टः कोकिलया—अवकोकिलः । ❀[2]पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । परिग्लानोऽध्ययनाय—पर्यध्ययनः । ❀[3]निरादयः क्रान्ताद्यर्थे पञ्चम्या । निष्क्रान्तः कौशाम्ब्याः—निष्कौशाम्बिः ॥

[4]तत्रोपपदं सप्तमीस्थम् । ३ । १ । ९२ ॥

सप्तम्यन्ते पदे 'कर्मणी'त्यादौ—वाच्यत्वेन स्थितं यत्कुम्भादि, तद्वाचकं पदमुपपदसंज्ञं स्यात् । [ तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यात् ] ।

[5]उपपदमतिङ् । २ । २ । १९ ॥

उपपदं सुबन्तं समर्थेन नित्यं समस्यते । अतिङन्तश्चायं समासः ।

---

कौशाम्बी–'वत्स'देश–( 'रायबरेली'–प्रदेश–'बैसवाड़ा' )–राजधानी । सा च प्रयागस्य निकटे यमुनातटे इदानीं 'कोसम' इति प्रसिद्धः क्षुद्रो ग्रामः ।

सूत्रस्थं 'सप्तमीस्थ'मिति पदं व्याचष्टे—सप्तम्यन्ते इति । 'उपपद'मित्यन्वर्थसञ्ज्ञाबलादाह—तद्वाचकमिति । अन्वर्थसञ्ज्ञाबलादेव सञ्ज्ञाविधावपि सप्तमीग्रहणेन सप्तम्यन्तं गृह्यते । 'धातो'रित्यधिकारबलाच्च सन्निहिते धात्वधिकारे इत्यर्थो लभ्यते, तेन 'च्लि लुङि'त्यत्र लुङन्ते उपपदे इत्यर्थो न भवति ।

'तत्रे'त्यंशं व्याचष्टे—तस्मिन्निति । उपपदे सतीत्यर्थः । 'तत्र'ग्रहणाऽभावे तु 'बः कर्मणि ष्ट्रन्' इत्यादाविव 'कर्मण्य'णित्यादावपि कर्मण्यभिधेयेऽणित्यर्थः स्यात्, तथा च कर्त्तरि अण्प्रत्ययो न स्यात् ।

'कर्मण्य'णित्यत्रेदं सूत्रं स्वयं सङ्गमयति—कर्मणीति । 'कर्मण्य'णित्यत्र सप्तम्यन्तं पदं—'कर्मणी'ति, तद्वाच्यं-कुम्भादि, तद्वाचकं कुम्भपदमुपपदसञ्ज्ञमिति समन्वयः ।

---

१ 'अव'आदि, 'क्रुष्ट'आदि अर्थों में तृतीयान्त के साथ समास को प्राप्त हों ।
२ 'परि'आदि, 'ग्लान'आदि अर्थों में चतुर्थ्यन्त के साथ समास को प्राप्त हों ।
३ 'निर्'आदि, 'क्रान्त'आदि अर्थों में पञ्चम्यन्त के साथ समास को प्राप्त हों ।
४ सप्तम्यन्त जो कर्मणीत्यादि पद, उनमें वाच्यत्वेन स्थित ( उनका वाच्य) जो कुम्भादि अर्थ, तद्वाचक जो कुम्भ आदि पद, उनकी उपपदसंज्ञा हो ।
५ उपपद जो सुबन्त, वह समर्थ के साथ नित्य समास को प्राप्त हो ।

कुम्भं करोतीति कुम्भकारः । अतिङ् किम् ? । मा भवान् भूत् । 'मा'ङिति सप्तमीनिर्देशान्माङुपपदम् । (प.) **गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः** । व्याघ्री । अश्वक्रीती । कच्छपीत्यादि ।

**[1]तत्पुरुषस्याऽङ्गुलेः संख्या-ऽव्ययादेः । ५ । ४ । ८६ ॥**

---

प्रकृते—कुम्भ अस् कारेत्यलौकिकं, कुम्भं करोतीति च लौकिकं विग्रहवाक्यम् । अतिङ् किमिति । 'सुपे'त्यधिकारात्किमतिङ्ग्रहणेनेति प्रश्नः । अत्र अतिङ्ग्रहणं ज्ञापयति—'सुपे'त्येतन्नेहानुवर्त्तते इत्याशयेनाह—मा भवानिति । समासाऽभाव-सूचनाय—भवानिति मध्ये उपात्तम् । अतिङ्ग्रहणात्सुपेत्येतन्नेहानुवर्तते, 'कुगति-प्रादय' इत्यत्रापि—'कुप्रादयः' इति 'गति'रिति च योगं विभज्य आद्यस्य—कुप्रादयः सुबन्ताः सुबन्तेन सह समस्यन्ते इत्यर्थः । 'गति'रित्यंशे तु अतिङ्ग्रहणमपकृष्यते, सुपेति निवृत्तं, तेन तस्य 'गतिसञ्ज्ञकं सुबन्तमतिङन्तेन सह समस्यते' इत्यर्थः । तेन गत्युपपदयोः समासः प्राक्सुबुत्पत्तेरिति लभ्यते । स्थालीपुलाकन्यायेन च परि-भाषासिद्धिस्तदाह—गतिकारकेति । व्याजिघ्रतीति व्याघ्री । 'आतश्चोपसर्गे' इति कः । आङो घ्रशब्देन, आघ्रस्य च विशब्देन समासः । स समासो यदि घ्रशब्दस्य सुबन्त-तामपेक्षेत, तर्हि सुबुत्पत्तये सङ्ख्याद्यपेक्षणात्ततः प्राग्लिङ्गयोगाल्लिङ्गबोधकष्टाप् स्यात्, जातिलक्षणो ङीष् तु न स्यात्, घ्रशब्दमात्रस्य जातिवाचकत्वाऽभावात् । सति टापि चाऽदन्तत्वविरहान्न ततो ङीषः प्राप्तिरिति सुबुत्पत्तेः पूर्वं समास आस्थितः । एवञ्च 'व्याघ्री'त्यत्र समासानन्तरं जातिवाचकत्वान्ङीष् सिद्ध्यतीत्याशयः ।

अश्वेन क्रीता—अश्वक्रीतीत्यत्र 'कर्त्तृकरणे' इति सुबुत्पत्तेः पूर्वं समासे 'क्रीतात्करणे'ति ङीष् । सुबुत्पत्त्यनन्तरं समासे तु पूर्वं टापि सति ङीष् न स्याददन्त-त्वविरहात् ।

कच्छेन पिबतीति—कच्छपीत्यत्र सुपीति योगविभागात् कः । सुबुत्पत्तेः पूर्व-मुपपदसमासे जातिलक्षणो ङीष् । सुबुत्पत्त्यनन्तरं समासे तु पूर्वं टापि अदन्तत्व-विरहाज्जातिलक्षणो ङीष् न स्यात् ।

---

१ संख्या और अव्यय आदि में हैं जिसके और अङ्गुली शब्द है अन्त में जिसके ऐसा जो तत्पुरुष समास, उससे समासान्त अच् प्रत्यय हो ।

सङ्ख्याऽव्ययादेरङ्गुल्यन्तस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाण-मस्य-द्व्यङ्गुलम् । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ॥

[1]अहः-सर्वै-कदेश-सङ्ख्यात-पुण्याच्च रात्रेः । ५ । ४ । ८७ ॥

एभ्यो रात्रेरच् स्याच्चात्सङ्ख्याव्ययादेः । अहर्ग्रहणं द्वन्द्वार्थम् ॥

[2]रात्रा-ऽह्ना-ऽहाः पुंसि । २ । ४ । २९ ॥

एतदन्तौ द्वन्द्व-तत्पुरुषौ पुंस्येव । अहश्च रात्रिश्च—अहोरात्रः । सर्व-रात्रः । सङ्ख्यातरात्रः । संख्यापूर्वं रात्रं क्लीबम् । द्विरात्रम् । त्रिरात्रम् ॥

[3]राजा-ऽहः-सखिभ्यष्टच् । ५ । ४ । ९१ ॥

एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः ॥

[4]आन्महतः समानाधिकरण-जातीययोः । ६ । ३ । ४६ ॥

---

'व्यङ्गुल'मित्यत्र 'तद्धितार्थ' इति समासः । 'प्रमाणे लो द्विगोर्नित्य'मिति मात्रचो लुगिति वृत्तिकृत् । द्वयसचो लुगिति तु मनोरमाकृतः ।

निर्गतेति । 'निरादयः क्रान्ताद्यर्थे' इति समासः । द्वन्द्वार्थमिति । अहो रात्रिरिति तत्पुरुषस्याऽसम्भवात्, 'हेमन्तशिशिरावहोरात्रे चे'त्यत्र द्वन्द्वे समासान्त-दर्शनाच्चेत्याशयः ।

सर्वा रात्रिः सर्वरात्र इत्यत्र 'पूर्वकाले'ति समासः । परमश्चासौ राजा च परमराजः । टचि 'नस्तद्धिते' इति टिलोपः । द्वयो रात्र्योः समाहारो द्विरात्रम् । 'तद्धितार्थे'ति समासः । एवमग्रेऽपि ।

---

१ अहन्, सर्व, एकदेश, संख्यात और पुण्य इनसे परे जो रात्रि शब्द उससे समासान्त अच् प्रत्यय हो । चकार से संख्या और अव्यय आदि में हो तो भी रात्रि शब्द से समासान्त अच् प्रत्यय हो ।

२ रात्र और अह्न और अह एतदन्त जो द्वन्द्व और तत्पुरुष वह पुँल्लिङ्ग में हो ।

३ राजन्, अहन् और सखि शब्द, ये अन्त में हैं जिसके ऐसा जो तत्पुरुष-समास उससे टच् हो । ४ महत् शब्द को आकार अन्तादेश हो, समानाधि-करण उत्तरपद परे रहते और जातीयर् प्रत्यय परे रहते ।

महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे, जातीये च परे। महाराजः । 'प्रकारवचने जातीयर्' । महाप्रकारो—महाजातीयः ॥

[1]द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः । ६ । ३ । ४७ ॥

[ अनयोः ] आत्स्यात् । द्वौ च दश च द्वादश । अष्टाविंशतिः ॥

[2]त्रेस्त्रयः । ६ । ३ । ४८ ॥

त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् ॥

[3]परवल्लिङ्गं द्वन्द्व-तत्पुरुषयोः । २ । ४ । २६ ॥

एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धपिप्पली । ❀[4]द्विगु-प्राप्ता-ऽऽपन्ना-ऽलम्पूर्व-गतिसमासेषु प्रतिषेधो वाच्यः । पञ्चसु कपालेषु संस्कृतः—पञ्चकपालः पुरोडाशः ॥

---

महांश्चासौ राजा च महाराजः । 'सन्महद्'दिति समासः ।

प्रकारेति । अनेन सूत्रेण 'महाजातीय' इत्यत्र जातीयर् प्रत्यये रूपमिदमित्यर्थः ।

अबहुव्रीह्यशीत्योः किम् ?, द्वित्राः, द्व्यशीतिः । सन्धिवेलादिषु त्रयोदशीति पाठात्सान्तोऽयमादेशः । त्रेरिति । अस्य सूत्रस्य—त्रिशब्दस्य त्रयस् स्यात्पूर्वविषये इत्यर्थः ।

प्रतिषेधः=परवल्लिङ्गतायाः प्रतिषेधः । पञ्चकपाल इति । अयं द्विगुसमासः, 'तद्धितार्थे'ति समासस्य हि सङ्ख्यापूर्वस्य द्विगुसञ्ज्ञाविधानात् । कपालशब्दस्य क्लीबतया समासेऽपि नपुंसकलिङ्गे प्राप्तेऽनेन निषेधाद्विशेष्यनिघ्नता ।

---

१ द्वि और अष्टन् शब्द को आत्व हो, संख्या परे रहते । परन्तु बहुव्रीहि समास में और अशीति शब्द परे रहते यह आत्व नहीं हो ।

२ त्रि शब्द को त्रयस् आदेश हो, सङ्ख्या परे रहते । परन्तु बहुव्रीहि समास में और अशीति शब्द परे रहते यह आदेश नहीं हो ।

३ द्वन्द्व और तत्पुरुष में परपद की तरह ही लिङ्ग हो ।

४ द्विगुसमास और प्राप्त, आपन्न, अल- वंक समास और गतिसमास इनमें परपद की तरह लिङ्ग नहीं हो ।

[1]प्राप्ता-ऽऽपन्ने च द्वितीयया । २ । २ । ४ ॥

[प्राप्ताऽऽपन्ने च द्वितीयया] समस्येते । अकारश्चानयोरन्तादेशः । प्राप्तो जीविकां-प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै-अलङ्कुमारिः । अत एव ज्ञापकात्समासः । निष्कौशाम्बिः ॥

[2]अर्धर्चाः पुंसि च । २ । ४ । ३१ ॥

अर्धर्चादयः शब्दाः पुंसि, क्लीबे च स्युः । अर्धर्चः । अर्धर्चम् । एवं ध्वज-तीर्थ-शरीर-मण्डप-यूप-[ मण्ड-पीयूष- ] देहा-ऽङ्कुश-पात्र-सूत्रादयः । सामान्ये नपुंसकम् । मृदु पचति । प्रातः कमनीयम् ॥

इति तत्पुरुषसमासप्रकरणम् ॥ ३ ॥

---

# अथ बहुव्रीहिः ।

[3]शेषो बहुव्रीहिः । २ । २ । २३ ॥

अधिकारोऽयं प्राग्द्वन्द्वात् ॥

---

अत एव ज्ञापकात्=प्रतिषेधारम्भादेव । समासः=अलंशब्देन समासः । ऋचोऽर्धम्-अर्धर्चः । 'ऋक्पूर'ब्बिति अप्रत्ययः । अर्धर्चा इति । सूत्र-पद्मादि-शब्दानामत्र गणे पाठेऽपि पुंसि प्रयोगो न भवति, शिष्टैरप्रयोगादिति प्रयोगविदः ।

सामान्ये=लिङ्गविशेषाऽविवक्षायाम् । अनियतलिङ्गविषयकमिदम् । तेन आदिः पचतीत्यादौ न क्लीबता ॥ इति तत्पुरुषसमासप्रकरणम् ॥

'द्वितीया श्रिते'त्यादिना यस्य त्रिकस्य स्वौजसित्यस्य विशिष्य समासो नोक्तः-स शेषः । प्रथमान्तमिति यावत् । यद्यपि 'प्रादयो गताद्यर्थे प्रथमये'ति प्रथमाया अपि पूर्वं समास उक्त एव,तथाऽपि सूत्रकृता प्रथमान्तेन समासानुक्तेर्न दोषः । ननु

---

१ प्राप्त और आपन्न शब्द द्वितीयान्त के साथ समास को प्राप्त हों । और इनको अकार अन्तादेश भी हो ।

२ अर्धर्चादि जो शब्द वे पुँल्लिङ्ग और नपुंसक लिङ्ग दोनों में हों ।

३ 'चार्थे द्वन्द्वः' इस सूत्रतक बहुव्रीहि का अधिकार है ।

[1]अनेकमन्यपदार्थे । २ । २ । २४ ॥

अनेकं प्रथमान्तमन्यस्य पदस्याऽर्थे वर्त्तमानं वा समस्यते, स बहुव्रीहिः ॥

[2]सप्तमी-विशेषणे बहुव्रीहौ । २ । २ । ३५ ॥

सप्तम्यन्तं, विशेषणं च बहुव्रीहौ पूर्वं स्यात्। अत एव ज्ञापकाद् व्यधिकरणपदो बहुव्रीहिः ॥

[3]हलदन्तात्सप्तम्याः संज्ञायाम् । ६ । ३ । ९ ॥

हलन्तादवन्ताच्च सप्तम्या अलुक् स्यात् । कण्ठेकालः ।

प्राप्तमुदकं यं स—प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। पीताम्बरो हरिः। वीरपुरुषको ग्रामः।

---

प्रथमान्तस्यैव समासे 'कण्ठेकाल' इत्यादौ सप्तम्यन्तस्य कथं समास इति चेत्सप्तमीविशेषणे बहुव्रीहाविति ज्ञापकात्सप्तम्यन्तेनापि बहुव्रीहिरित्यर्थस्य लाभेनाऽदोषात्। अन्येति। समस्यमानपदातिरिक्तपदस्याऽर्थे इत्यर्थः। कण्ठे कालो यस्यासौ—कण्ठेकालः=नीलकण्ठः। प्राप्तोदक इति। ग्रामकर्मकप्राप्तिकर्तृ उदकं विग्रहार्थः, उदककर्तृकप्राप्तिकर्मेति समासार्थः। अनडुत्कर्तृकोद्वहनकर्मीभूतो रथ इति विग्रहार्थः, रथकर्मकोद्वहनकर्त्ताऽनड्वानिति च समासार्थः। रुद्रसम्प्रदानकोपहरणकर्मीभूतः पशुरिति विग्रहार्थः। पशुकर्मकोपहरणसम्प्रदानं रुद्र इति समासार्थः।

उद्धृतौदना स्थालीति। स्थाल्यवधिकोद्धरणकर्मीभूत ओदन इति विग्रहार्थः। ओदनकर्मकोद्धरणावधिः स्थालीति च समासार्थः। एवमग्रेऽपि ध्येयम्। पीतमम्बरं यस्यासौ—पीताम्बरः। वीराः पुरुषा यस्मिन्नसौ—वीरपुरुषकः।

---

१ अनेक जो प्रथमान्त अन्यपद के अर्थ में वर्तमान, वह विकल्प से समास को प्राप्त हो, और वह समास बहुव्रीहिसञ्ज्ञक हो।

२ सप्तम्यन्त और विशेषणवाचक का बहुव्रीहि समास में पूर्व निपात हो।

३ हलन्त और अदन्त से परे जो सप्तमी उसका अलुक् हो।

❀ [1]प्रादिभ्यो धातुजस्य वाच्यो, वा चोत्तरपदलोपः । प्रपतितपर्णः । प्रपर्णः । ❀ [2]नञोऽस्त्यर्थानां वाच्यो, वा चोत्तरपदलोपः । अविद्यमानपुत्रः—अपुत्रः ॥

[3]स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणी-प्रियादिषु । ६ । ३ । ३४ ॥

'भाषितपुंस्कात्'—अनूङ्—ऊङोऽभावोऽस्यामिति बहुव्रीहिः । निपातनात्पञ्चम्या अलुक्, षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र यथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात्, समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे, न तु

'शेषाद्विभाषे'ति वैकल्पिकः कप् । प्रादिति । प्रादिभ्यः परं यद्धातुजं, तदन्तस्य पदान्तरेण बहुव्रीहिसमासो व्याख्येयः, उत्तरपदस्य = पूर्वपदान्तर्गतस्योत्तरपदस्य धातुजस्य विकल्पेन लोपश्चेति वार्त्तिकार्थः । यथा 'प्रपतितपर्ण' इत्यादौ प्राद्युत्तरं धातुजं-'पतित' इति, तदन्तं 'प्रपतित' इति, तस्य पर्णशब्देन सह बहुव्रीहिसमासः, पतितशब्दस्य च वा लोप इति भावः । प्रपतितानि पर्णानि यस्यासौ-प्रपतितपर्ण इति च विग्रहः ।

नञ इति । नञः परेषामस्त्यर्थवाचिनां पदान्तरेण बहुव्रीहिर्व्याख्येयः, अस्त्यर्थवाचिनान्तु वा लोप इत्यर्थः । अत्रोभयत्र वैकल्पिकोत्तरपदलोपमात्रं विधेयः, समासस्तु 'अनेकमन्ये'ति सूत्रेणैव सिद्ध इति विवेकः ।

अलुक् = 'भाषितपुंस्कादनूङि'त्यत्र पञ्चम्या अलुक् । षष्ठ्याश्च लुक् । एवञ्च 'भाषितपुंस्काऽनूङः' इति प्रयोग उचित इति भावः । भाषितः पुमान्यस्मिन्नर्थे स-भाषितपुंस्कः, सोऽस्त्यस्य तद्भाषितपुंस्कमिति अर्शआद्यजन्तोऽयमित्याशयेन व्याचष्टे—तुल्ये इति ।

१ प्रादि से परे जो धातुज, तदन्त का पदान्तर के साथ समास हो, और उत्तरपद का लोप हो, विकल्प करके । २ नञ् से परे जो अस्त्यर्थ वाचक शब्द, उसका अन्यपद के साथ समास हो और उत्तर पद का लोप हो, विकल्प करके ।

३ प्रवृत्तिनिमित्त तुल्य होते हुए जो भाषितपुंस्क, उससे परे ऊङ् का अभाव है जिसमें ऐसा जो स्त्रीवाचकशब्द, उसको पुंवाचक की तरह रूप हो, समानाधिकरण स्त्रीलिङ्ग उत्तरपद परे रहते । परन्तु पूरणी और प्रियादि परे रहते नहीं हो ।

पूरण्यां, प्रियादौ च परतः। 'गोस्त्रियो'रिति ह्रस्वः। चित्रगुः। रूपवद्भार्यः। अनूङ् किम्?। वामोरूभार्यः॥ पूरण्यान्तु—

[1]अप्पूरणी-प्रमाण्योः। ५। ४। ११६॥

पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप्स्यात्। कल्याणी पञ्चमी यासां रात्रीणां ताः—कल्याणीपञ्चमा रात्रयः। स्त्री प्रमाणी यस्य स—स्त्रीप्रमाणः। अप्रियादिषु किम्?। कल्याणीप्रिय इत्यादि।

[2]बहुव्रीहौ सक्थ्य-क्ष्णोः स्वाङ्गात्षच्। ५। ४। ११३॥

स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद् बहुव्रीहेः षच् स्यात्। दीर्घसक्थः। जलजाक्षी। स्वाङ्गात्किम्?। दीर्घसक्थि शकटम्। स्थूलाक्षा-वेणुयष्टिः। 'अक्ष्णोऽदर्शना'दितिदिति वक्ष्यमाणोऽच्॥

[3]द्वि-त्रिभ्यां ष मूर्ध्नः। ५। ४। ११५॥

आभ्यां मूर्ध्नः षः स्याद् बहुव्रीहौ। द्विमूर्धः। त्रिमूर्धः।

---

चित्रा गावो यस्यासौ चित्रगुः। रूपवती भार्या यस्यासौ—रूपवद्भार्यः। पञ्चमीति। अत्र पूरण्यां परतो न पुंवत्। पञ्चमीशब्दो हि—पञ्चानां पूरणी पञ्चमीति रीत्या पूरणप्रत्ययान्तः। कल्याणी प्रिया यस्यासौ—कल्याणीप्रियः=मृतस्वपत्नी-प्रियः। कल्याणशब्देन मृता भार्याऽभिधीयते। यथा—'कल्याणभार्य' इति लोके विधुरे प्रयोगः।

दीर्घे सक्थिनी यस्यासौ—दीर्घसक्थः। 'सक्थि: क्लीबे पुमानूरुः' इत्यमरः। जलजे इव अक्षिणी यस्याः सा—जलजाक्षी=कमललोचना।

स्थूलाक्षेति। अक्षिशब्देनाऽत्र अक्षिसदृशग्रन्थिरभिधीयते। द्वौ मूर्धानौ

---

१ पूरणार्थप्रत्ययान्त जो स्त्रीलिङ्ग तदन्त बहुव्रीहि से और प्रमाण्यन्त बहुव्रीहि से समासान्त अप् प्रत्यय हो।

२ स्वाङ्गवाची जो सक्थि और अक्षि, तदन्त बहुव्रीहि से षच् प्रत्यय हो।

३ द्वि और त्रि शब्द पूर्व में है जिससे ऐसा जो मूर्धन् शब्द, उससे समासान्त ष प्रत्यय हो, बहुव्रीहिसमास में।

[1]अन्तर्बहिर्भ्यां च लोम्नः । ५ । ४ । ११८ ॥

आभ्यां लोम्नोऽप्स्याद् बहुव्रीहौ । अन्तर्लोमः । बहिर्लोमः ॥

[2]पादस्य लोपोऽहस्त्यादिभ्यः । ५ । ४ । १३८ ॥

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद् बहुव्रीहौ । व्याघ्रस्येव पादावस्य—व्याघ्रपात् । अहस्त्यादिभ्यः किम् ? । हस्तिपादः । कुसूलपादः ॥

[3]संख्या-सु-पूर्वस्य । ५ । ४ । १४० ॥

[संख्यासुपूर्वस्य]पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ । द्विपात् । सुपात् ॥

[4]उद्-विभ्यां काकुदस्य । ५ । ४ । १४८ ॥

[ उद्विभ्यां परस्य काकुदस्य ] लोपः स्यात् । उत्काकुत् । विकाकुत् ।

[5]पूर्णाद्विभाषा । ५ । ४ । १४९ ॥

पूर्णकाकुत् । पूर्णकाकुदः ॥

---

यस्यासौ द्विमूर्धः । अन्तर्लोमानि यस्यासौ—अन्तर्लोमः ।

कुसूलेति । कुसूलस्येव पादावस्य कुसूलपादः । कुसूलं—धान्यावपनम् । ( 'बखारी' 'ओबेरी' ) । स्थौल्येन चात्र सादृश्यम् । द्वौ पादावस्य द्विपात् । शोभनौ पादावस्य सुपात् । उत्=ऊर्ध्वं काकुदं यस्यासावुत्काकुत् । काकुदं=तालु । विकाकुदिति । विकृतं, विशिष्टं वा काकुदं यस्येति विग्रहः । पूर्णं काकुदं यस्यासौ—पूर्णकाकुत् ।

---

१ अन्तर् और बहिर् शब्द पूर्व में हैं जिसके ऐसा जो लोमन् शब्द, उससे अप् प्रत्यय हो, बहुव्रीहि समास में ।

२ हस्त्यादि से भिन्न जो उपमानवाचक शब्द उनसे परे जो पादशब्द उसका लोप हो, बहुव्रीहि समास में ।

३ संख्या और सु पूर्व में है जिसके ऐसा जो पाद शब्द, उस ( के अन्त ) का लोप हो, बहुव्रीहि में ।

४ उत् और वि से परे जो काकुद शब्द उसका लोप हो, बहुव्रीहि समास में ।

५ पूर्ण से परे जो काकुद शब्द उसका लोप हो, विकल्प करके ।

[1]सुहृद्-दुर्हृदौ मित्रा-ऽमित्रयोः । ५ । ४ । १५० ॥

सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते। सुहृत्—मित्रम्। दुर्हृत्—अमित्रः ॥

[2]उरःप्रभृतिभ्यः कप् । ५ । ४ । १५१ ॥

[3]सोऽपदादौ । ८ । ३ । ३८ ॥

पाश-कल्प-क-काम्येषु [ परेषु ] विसर्गस्य सः स्यात् ॥

[4]कस्कादिषु च । ८ । ३ । ४८ ॥

एष्विण उत्तरस्य विसर्गस्य षोऽन्यस्य तु सः। इति सः। व्यूढोरस्कः ॥

[5]इणः षः । ८ । ३ । ३९ ॥

इण उत्तरस्य विसर्गस्य षः स्यात्, पाश-कल्प-क-काम्येषु परेषु । प्रियसर्पिष्कः ॥

[6]निष्ठा । २ । २ । ३६ ॥

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात्। युक्तयोगः ॥

---

सुष्ठु हृदयं यस्यासौ—सुहृत्। दुष्टु हृदयं यस्यासौ—दुर्हृत्।

व्यूढमुरो यस्याऽसौ व्यूढोरस्कः। व्यूढं = विशालं, सुदृढञ्च। प्रियं सर्पिर्यस्यासौ प्रियसर्पिष्कः। योगो युक्तो येनासौ—युक्तयोगः।

---

१ सु और दुर् से परे जो हृदय शब्द उसको हृद् आदेश हो, क्रमसे मित्र और अमित्र अर्थ में।

२ उरःप्रभृतिगणपठित जो शब्द उनसे कप् प्रत्यय हो।

३ विसर्जनीय को सकार आदेश हो, पाश कल्प क काम्य प्रत्यय परे रहते।

४ कस्कादिगण पठित शब्दावयव जो इण् उससे परे जो विसर्ग उसको षत्व हो। और इण् उत्तर से भिन्न विसर्ग को सत्व हो।

५ इण् से उत्तर जो विसर्ग उसको षत्व हो, पाश कल्प क काम्य परे रहते।

६ निष्ठान्त का बहुव्रीहिसमास में पूर्व निपात हो।

[1]शेषाद्विभाषा । ५ । ४ । १५४ ॥

अनुक्तसमासान्ता [-च्छेषाधिकारस्था-] द्बहुव्रीहेः कब्वा स्यात् । महायशस्कः । महायशाः ॥

इति बहुव्रीहिसमासप्रकरणम् ॥ ४ ॥

# अथ द्वन्द्वः ।

[2]चार्थे द्वन्द्वः । २ । २ । २९ ॥

अनेकं सुबन्तं चाऽर्थे वर्त्तमानं वा समस्यते, स द्वन्द्वः । समुच्चयाऽन्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्र 'ईश्वरं गुरुं च भजस्वे'ति परस्परनिरपेक्षस्याऽनेकस्यैकस्मिन्नन्वयः समुच्चयः । 'भिक्षामट, गां चानये'त्यन्यतरस्याऽऽनुषङ्गिकत्वेनाऽन्वयोऽन्वाचयः । अनयोरसामर्थ्यात्समासो न ।

---

महद्यशो यस्यासौ—महायशस्कः ।

'अनेकमन्यपदार्थे'इत्यतोऽनेकमित्यनुवर्त्तते, 'सुबामन्त्रिते' इत्यतः सुबिति च, 'समास' इति 'विभाषे'ति चाधिक्रियते, तदाह—अनेकमिति ।

अनेकस्य = प्रकृते ईश्वरस्य, गुरोश्च, एकस्मिन् = भजनादिक्रियादौ । गुर्वीश्वरयोः—परस्परनिरपेक्षत्वञ्च—एकस्येश्वरस्य भजनक्रियायामन्वयोत्तरमपरस्य गुरोः क्रियापदावृत्त्या तत्रान्वयादेव । आनुषङ्गिकत्वम्—अनुद्देश्यत्वम् । अन्यतरस्याऽऽनुषङ्गिकत्वेऽन्यतरस्य प्राधान्यमपि लभ्यते, तच्च स्वसम्बन्धिक्रियाया अवश्यकर्त्तव्यत्वेनैवेत्यवधेयम् । भिक्षामटेत्यादौ हि अदर्शनाद्गामनानयन्नपि भिक्षामटत्येवेति भिक्षा प्रधानं, गवानयनमप्रधानम् ।

---

१ अनुक्तसमासान्त जो बहुव्रीहि उससे कप् प्रत्यय हो ।

२ अनेक जो सुबन्त, चकार के अर्थ में वर्तमान, वे समास को प्राप्त हों, विकल्प से ।

'धवखदिरौ छिन्धी'ति मिलितानामन्वय इतरेतरयोगः। 'संज्ञापरिभाष'-मिति समूहः—समाहारः।

[1]राजदन्तादिषु परम्। २।२।३१॥

एषु पूर्वप्रयोगार्हं परं स्यात्। दन्तानां राजा—राजदन्तः।

*धर्मादिष्वनियमः। अर्थधर्मौ। धर्मार्थावित्यादि।

[2]द्वन्द्वे घि। २।२।३२॥

द्वन्द्वे घिसंज्ञं पूर्वं स्यात्। हरिश्च हरश्च हरिहरौ॥

[3]अजाद्यदन्तम्। २।२।३३॥

[ अजाद्यदन्तं ] द्वन्द्वे पूर्वं स्यात्। ईशकृष्णौ॥

[4]अल्पाच्तरम्। २।२।३४॥

शिवकेशवौ॥

[5]पिता मात्रा। १।२।७०॥

मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च-पितरौ। मातापितरौ वा॥

---

मिलितानाम्=परस्परापेक्षाणाम्। 'उद्भूतावयवभेदसमूहस्वरूपाणा'मिति शेषः। अन्वयः=एकधर्मावच्छिन्नत्वेनाऽन्वयः। असामर्थ्यात्=एकार्थीभावाऽभावात्। सञ्ज्ञा च परिभाषा च अनयोः समाहारः—सञ्ज्ञापरिभाषम्। समूहः=अनुद्भूतावयवभेदः समूहः। अर्थश्च धर्मश्च-धर्मार्थौ, अर्थधर्मौ च।

अजादि च तददन्तञ्च—अजाद्यदन्तम्=अजाद्यकारान्तं शब्दस्वरूपम्। यथा ईशशब्दोऽजादिरकारान्तश्चेति तस्य पूर्वनिपातः।

---

१ राजदन्तादि गण में पूर्व प्रयोगार्ह जो शब्द उसका पर प्रयोग ( परनिपात ) हो।

२ द्वन्द्वसमास में घिसंज्ञक का पूर्व निपात हो।

३ द्वन्द्वसमास में अजादि जो अदन्त उसका पूर्व निपात हो।

४ द्वन्द्वसमास में अल्पाच्तर ( कम अच् वाले ) का पूर्वनिपात हो।

५ मातृशब्द के साथ कहा गया जो पितृ-शब्द वह विकल्प से शेष रहे।

[1]द्वन्द्वश्च प्राणि-तूर्य-सेनाङ्गानाम् । २ । ४ । २ ॥

एषां द्वन्द्व एकवत् । पाणिपादम् । मार्दङ्गिकवैणविकम् । रथिकाऽश्वारोहम् ॥

[2]द्वन्द्वाच्चु-द-ष-हान्तात्समाहारे । ५ । ४ । १०६ ॥

चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे । वाक् च त्वक् च वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम् ? । प्रावृट्शरदौ ॥

इति द्वन्द्वसमासप्रकरणम् ॥ ५ ॥

---

# अथ समासान्ताः ।

[3]ऋक्पूर-ब्धूः-पथामाऽऽनक्षे । ५ । ४ । ७४ ॥

'अ–अनक्षे' इति च्छेदः । ऋगाद्यन्तस्य समासस्य अप्रत्ययो-

---

द्वन्द्वश्चेति । प्राण्यङ्गानां, तूर्याङ्गानां, सेनाङ्गानाञ्च द्वन्द्व एकवदित्यर्थः । पाणी च पादौ च एषां समाहारः–पाणिपादम् । मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । वेणुवादनं शिल्पमस्य—वैणविकः । मार्दङ्गिकाश्च वैणविकाश्च एषां समाहारः–मार्दङ्गिकवैणविकम् । स्रक्=माल्यम् । विवाहमण्डपे हवनार्थं शमीपत्राणि, कन्याऽऽरोहणार्थञ्च दृषदुपनीय स्थाप्यते, तत्रायं प्रयोगः । शमी च दृषच्च अनयोः समाहारः–शमीदृषदम् । ( शमी='जांटी' ) । वाक् च त्विट् च अनयोः समाहारः–वाक्त्विषम् । त्विट्=कान्तिः । छत्रञ्च उपानहौ च एषां–समाहारः–छत्रोपानहम् । प्रावृट् च शरच्चानयोरितरेतरयोगः–प्रावृट्शरदौ । ॥ इति द्वन्द्वप्रकरणम् ॥

---

१ प्राणि, तूर्य और सेनाङ्गका जो द्वन्द्व वह एकवत् हो ।

२ चवर्गान्त, दान्त, षान्त और हान्त जो समाहारद्वन्द्व उससे टच् प्रत्यय हो ।

३ ऋक् पूः अप् धूः ये हैं अन्त में जिसके ऐसा जो समास, तदन्त से 'अ' प्रत्यय हो । परन्तु अक्ष अर्थ में जो धूः तदन्त से अप्रत्यय नहीं हो ।

ऽन्तावयवः स्यात्। अक्षे या धूस्तदन्तस्य तु न। अर्धर्चः। विष्णुपुरम्। विमलापं सरः। राजधुरा। अक्षे तु—अक्षधूः। दृढधूः—अक्षः। सखिपथः। रम्यपथो देशः॥

[1]अक्ष्णोऽदर्शनात्। ५। ४। ७६॥

अचक्षुःपर्यायादक्ष्णोऽच स्यात्समासान्तः। गवामक्षीव गवाक्षः।

[2]उपसर्गादध्वनः। ५। ४। ८५॥

प्रगतोऽध्वानं-प्राध्वो रथः॥

[3]न पूजनात्। ५। ४। ६९॥

पूजनार्थात्परेभ्यः समासान्ता न स्युः। सुराजा। अतिराजा॥

इति समासान्ताः॥

इति समासप्रकरणम्॥

---

विष्णोः पूरिति—विष्णुपुरम्। क्लीबत्वं लोकात्। विमला आपो यत्र तत्-विमलापम्। (सरः=झील)। राज्ञो धूः-राजधुरा। धूः=भारः।

अक्षे धूः—अक्षधूः। दृढा धूर्यस्यासौ-दृढधूः। अत्रोभयत्रापि अक्षसम्बन्धिन्या धुरः सत्त्वान्न समासान्तः।

सख्युः पन्थाः—सखिपथः। रम्यः पन्था यत्रासौ रम्यपथः।

'वातायनं गवाक्षः' इत्यमरः। (झरोखा)। प्राध्व इति। 'अत्यादयः क्रान्ताद्यर्थे' इति तत्पुरुषसमासः। (प्राध्वः='पादरा', 'सीधा' सरपट दौड़ने वाला)।

शोभनो राजा सुराजा। 'कुगती'ति समासः। एवम्—अतिशयितो राजा अतिराजेत्यत्रापि।

❀ इति समासान्ताः ❀

---

१ चक्षुर्भिन्नपर्याय जो अक्षिशब्द उससे समासान्त अच् प्रत्यय हो।

२ उपसर्ग से परे जो अध्वन् शब्द उससे समासान्त अच् प्रत्यय हो।

३ पूजनार्थक से परे समासान्त प्रत्यय नहीं हों।

# अथ ताद्धिताः ।

## तत्राऽऽदौ साधारणप्रत्ययाः ।

[1]समर्थानां प्रथमाद्वा । ४ । १ । ८२ ॥

इदं पदत्रयमधिक्रियते, 'प्राग्दिश' इति यावत् ॥

[2]अश्वपत्यादिभ्यश्च । ४ । १ । ८४ ॥

एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु । अश्वपतेरपत्यादि—आश्वपतम् । गाणपतम् ॥

[3]दित्य-दित्या-दित्य-पत्युत्तरपदाण्ण्यः । ४ । १ । ८५ ॥

दित्यादिभ्यः, पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् । अणोऽपवादः । दितेरपत्यं—दैत्यः । अदितेरादित्यस्य वा—

[4]हलो यमां यमि लोपः । ८ । ४ । ६४ ॥

हलः परस्य यमो लोपः स्याद्वा यमि । इति यलोपः । आदित्यः । प्राजापत्यः । '[5]देवाद्यञञौ' । दैव्यम् । दैवम् ।

---

इदमिति । 'समर्थाना'मिति, 'प्रथमा'दिति, 'वा' इति चाधिक्रियते इत्यर्थः । 'पदत्रय'-मित्युक्त्या च प्रत्येकं स्वरितत्वं सूचितम् । प्राग्दीव्यतीयेषु='तेन दीव्यति खनति जयति जित'मिति सूत्रात्प्रागर्थेषु । अश्वपतेरपत्यम्—आश्वपतः । अश्वपतिना निर्वृत्तम्-आश्वपतम् । अश्वपतेरिदम्-आश्वपतमित्यादि । 'तद्धितेष्वचामादे'रित्यादिवृद्धिः । गणपतेरपत्यादि-गाणपतम् । अदितेरपत्यम्—आदित्यः । आदित्यस्याऽपत्यम्—आदित्यः । देवस्यापत्यादि— दैव्यम् । टिलोपवचनमव्ययानां

---

१ 'समर्थानां' 'प्रथमात्' और 'वा' इन तीन पदों का 'प्राग्दिशो विभक्तिः' इस सूत्र से पूर्व पूर्व अधिकार है ।

२ अश्वपत्यादिगणपठित जो शब्द उनसे अण् प्रत्यय हो, प्राग्दीव्यतीय अर्थों में ।

३ दिति, अदिति, आदित्य और पत्युत्तरपद इससे ण्य प्रत्यय हो, प्राग्दीव्यतीय अर्थों में ।

४ हल् से परे जो यम् उसका लोप हो, यम् परे रहते, विकल्प करके ।

५ देव शब्द से यञ् और अञ् प्रत्यय हो प्राग्दीव्यतीय अर्थों में ।

❀ [1]बहिषष्टिलोपो यञ्च । बाह्यः । ❀ [2]ईकक्च ॥

[3]किति च । ७ । २ । ११८ ॥

किति तद्धिते चाऽचामादेरचो वृद्धिः स्यात् । बाहीकः ॥

[4]गोरजादिप्रसङ्गे यत् । गोरपत्यादि-गव्यम् ॥

[5]उत्सादिभ्योऽञ् । ४ । १ । ८६ ॥

औत्सः ॥

इत्यपत्यादि-विकारान्तार्थसाधारणाः प्रत्ययाः ॥ १ ॥

---

# अथ अपत्याधिकारः ।

[6]स्त्री-पुंसाभ्यां नञ्स्नञौ भवनात् । ४ । १ । ८७ ॥

'धान्यानां भवने' इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः ।

स्त्रैणः । पौंस्नः ॥

---

भमात्रे' इत्यस्याऽनित्यतां ज्ञापयितुं, तेन 'आरातीय' इत्यत्र टिलोपो न । बहिर्भवः-बाह्यः । बाहीकः ।

गव्यमिति । अत्र 'गवि भवं' 'गोर्देवताऽस्य' 'गोरिद' मित्यादयोऽर्थाः । उत्से भवः-औत्सः । 'उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः' इत्यमरः । स्त्रियाः, पुंसो

---

१ बहिष् शब्द की टि का लोप हो, और उससे यञ् प्रत्यय भी हो ।

२ बहिष् शब्द से ईकक् प्रत्यय भी हो, और टि का लोप भी हो ।

३ अचों के मध्य में जो आदि अच् उसको वृद्धि हो, कित् तद्धित परे रहते ।

४ गो-शब्द से अजादि प्रत्यय के प्रसङ्ग में यत् प्रत्यय हो, प्राग्दीव्यतीय अर्थों में ।

५ उत्सादिगणपठित शब्दप्रकृतिक सुबन्त समर्थ से अञ् प्रत्यय हो ।

६ 'धान्यानां भवने क्षेत्रे' इस सूत्र से पूर्व २ अर्थों में स्त्री और पुम्स् शब्द से क्रम से नञ् और स्नञ् प्रत्यय हों ।

**[1]तस्याऽपत्यम् । ४ । १ । ९२ ॥**

षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता, वक्ष्यमाणाश्च प्रत्यया वा स्युः ॥

**[2]ओर्गुणः । ६ । ४ । १४६ ॥**

उवर्णान्तस्य भस्य गुणस्तद्धिते । उपगोरपत्यम्–औपगवः ।

आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ।

**[3]अपत्यं पौत्रप्रभृति गोत्रम् । ४ । १ । १६२ ॥**

अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ॥

**[4]एको गोत्रे । ४ । १ । ९३ ॥**

गोत्रे एक एवाऽपत्यप्रत्ययः स्यात् । उपगोर्गोत्रापत्यम्–औपगवः ।

---

वाऽपत्यादिः–स्त्रैणः, पौंस्नः । तस्येति । तस्येति षष्ठ्यन्तानुकरणं लुप्तपञ्चमीकम्, अपत्यमिति सप्तम्यर्थे व्यत्ययेन प्रथमा । एवमग्रेऽपि । उक्ताः=अणण्यादयः, वक्ष्यमाणाः=इञादयः ।

नन्वपत्यग्रहणं व्यर्थं, पौत्रादेरपत्यत्वाऽव्यभिचारादत आह–विवक्षितमिति । तेन पौत्रादेः शेषत्वेन विवक्षायां तु गार्ग्यस्याऽयमित्यादौ न गोत्रसञ्ज्ञा ।

पौत्रादिः = पौत्र–प्रपौत्र–प्रतिप्रपौत्रादिः ।

एक एवेति । उपगुशब्द एवाऽपत्ये प्रत्ययं लभते, न औपगवशब्द इति गोत्रापत्येऽपि अनन्तरापत्ये इव अणेव भवति, न तु औपगवस्यापत्यम्–औपगवि-

---

१ कृतसन्धि जो षष्ठ्यन्त सुबन्त समर्थ, उससे अपत्य अर्थ में उक्त अणादि प्रत्यय और वक्ष्यमाण इञ् आदि प्रत्यय विकल्प से हों ।

२ उवर्णान्त जो भसंज्ञक अङ्ग, ( उसका जो अन्त्य अल्, ) उसको गुण हो, तद्धित प्रत्यय परे रहते ।

३ अपत्यत्वेन विवक्षित जो पौत्रादि उनकी 'गोत्र' सञ्ज्ञा हो ।

४ गोत्र अर्थ में एक ही अपत्यसञ्ज्ञक प्रत्यय हो ।

## [1]गर्गादिभ्यो यञ् । ४ । १ । १०५ ॥

[ गर्गादिभ्यो यञ् स्याद् ] गोत्रापत्ये । गर्गस्य गोत्रापत्यं गार्ग्यः । वात्स्यः ॥

## [2]यञञोश्च । २ । ४ । ६४ ॥

गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे, न तु स्त्रियाम् । गर्गाः । वत्साः ॥

## [3]जीवति तु वंश्ये युवा । ४ । १ । १६३ ॥

वंश्ये=पित्रादौ-जीवति पौत्रादेर्यदपत्यं चतुर्थादि, तद्युवसंज्ञमेव स्यात् ॥

## [4]गोत्राद्यून्यस्त्रियाम् । ४ । १ । ९४ ॥

यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् । स्त्रियां तु न युवसंज्ञा ॥

---

रिति भवतीत्याशयः । पितृपितामहाद्युत्पादकप्रबन्धो वंशः, तत्र भवो वंश्यः । तदाह—पित्रादाविति । यथा—गर्गो मूलपुरुषः, तस्य यः प्रपौत्रः, स स्वपितरि, स्वपितामहे वा जीवति सति 'युव'सञ्ज्ञः । पित्रादौ मृते तु स ( चतुर्थोऽपि ) गोत्रसञ्ज्ञक एव, न युवसञ्ज्ञ इति भावः ।

यूनि=युवसञ्ज्ञके । गोत्रप्रत्ययं यञादिकमुत्पाद्य ततो युवप्रत्ययो भवति, न केवलादित्यर्थः ।

---

१ गर्गादिगणपठितशब्दप्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से यञ प्रत्यय हो, गोत्रापत्य अर्थ में ।

२ गोत्र में जो यञन्त, अञन्त, उनका अवयव जो यञ् और अञ्, उनका लुक् हो । यदि-यञ्-अञ् प्रत्ययकृत ही बहुत्व हो तो । परन्तु स्त्रीलिङ्ग में नहीं हो ।

३ वंश के मुख्य पित्रादि जीवित रहने पर पौत्रादि का अपत्य जो चतुर्थादि, ( प्रपौत्र आदि ) उसकी युवसञ्ज्ञा ही होती है, गोत्रसंज्ञा नहीं होती है ।

४ गोत्रप्रत्ययान्त से ही युवापत्य में प्रत्यय हो । परन्तु स्त्रीलिङ्ग में युवसञ्ज्ञा नहीं हो ।

[1]यञिञोश्च । ४ । १ । १०१ ॥

गोत्रे यौ यञिञौ तदन्तात्फक् स्यात् ॥

[2]आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम् । ७ । १ । २ ॥

प्रत्ययादेः फस्य–आयन्, ढस्य–एय्, खस्य–ईन्, छस्य–ईय्, घस्य–इय् एते स्युः । गर्गस्य युवापत्यं–गार्ग्यायणः । दाक्षायणः ॥

[3]अत इञ् । ४ । १ । ९५ ॥

[ अत इञ् स्याद् ] अपत्येऽर्थे । दाक्षिः ॥

[4]बाह्वादिभ्यश्च । ४ । १ । ९६ ॥

[ बाह्वादिभ्यश्च इञ्स्यादपत्येऽर्थे ] । बाहविः । औडुलोमिः ।
❀ [5]लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः । उडुलोमाः । आकृतिगणोऽयम् ।

[6]अनृष्यानन्तर्ये बिदादिभ्योऽञ् । ४ । १ । १०४ ॥

---

फगिति । अयं फक् यूनि भवति, न तु गोत्रे, 'गोत्रे एक एव प्रत्यय' इत्युक्तेः ।
अत इति । अदन्तात्षष्ठयन्तादिञ् स्यादपत्येऽर्थे । बाहोरपत्यं बाहविः ।
उडुलोम्नोऽपत्यम्—औडुलोमिः, औडुलोमी, उडुलोमाः—इत्येवं रूपाणि ।

---

१ गोत्र अर्थ में जो यञ् और इञ् तदन्त से फक् प्रत्यय हो, युव अर्थ में ।

२ प्रत्यय के आदिभूत जो फ-ढ-ख-छ व इनके स्थान में क्रम से आयन् एय् ईन् ईय् ये आदेश हों ।

३ अदन्त शब्द प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से इञ् प्रत्यय हो, अपत्य अर्थ में ।

४ बाह्वादि-गण पठितशब्दप्रकृतिक षष्ठ्यन्त समर्थ से इञ् प्रत्यय हो, अपत्य अर्थ में ।

५ लोमन् शब्द प्रकृतिक षष्ठ्यन्त सुबन्त समर्थ से अपत्य अर्थ में अकार प्रत्यय हो, बहुत्व में ।

६ बिदादि गणपठित शब्दप्रकृतिक षष्ठ्यन्त समर्थ से अञ् हो, गोत्र में । परन्तु

एभ्योऽञ् गोत्रे, ये त्वत्राऽनृषयस्तेभ्योऽपत्ये, अन्यत्र तु गोत्रे। बिदस्य गोत्रं-बैदः। बैदौ॥

[ [1]यञञोश्च। २। ४। ६४॥

गोत्रे यद्यञन्तमञन्तञ्च तदवयवयोरेतयोर्लुक् स्यात्, तत्कृते बहुत्वे, न तु स्त्रियाम् ]। बिदाः। पुत्रस्याऽपत्यं-पौत्रः। पौत्रौ। पौत्राः। एवं दौहित्रादयः॥

[2]शिवादिभ्योऽण्। ४। १। ११२॥

[ शिवादिभ्योऽण् स्यादपत्ये ]। शैवः। गाङ्गः॥

[3]ऋष्य-न्धक-वृष्णि-कुरुभ्यश्च। ४। १। ११४॥

ऋषिभ्यः—वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः—श्वाफल्कः। वृष्णिभ्यः—वासुदेवः। कुरुभ्यः—नाकुलः। साहदेवः॥

[4]मातुरुत्संख्या-स-म्भद्र-पूर्वायाः। ४। १। ११५॥

---

बिदस्य ऋषित्वेन गोत्रेऽञ्। बिदस्य गोत्रापत्यं—बैदः।

बिदा इत्यत्र बहुत्वे 'यञञोश्चे'ति अञो लुक्। पौत्रा इति। पुत्रस्याऽनृषितया ततोऽनन्तरापत्येऽञ्। पुत्रस्यापत्यं पौत्र इति च विग्रहः। अत्र गोत्रप्रत्ययाऽभावान्न बहुत्वेऽञो लुक्। दुहितुरपत्यं दौहित्रः। 'गोत्रे' इति निवृत्तम्।

शिवस्यापत्यं—शैवो गणेशः। गङ्गाया अपत्यं गाङ्गो—भीष्मः।

ऋष्येति। एभ्योऽपत्येऽण् स्यात्। वसिष्ठस्यापत्यं वासिष्ठः। द्वयोर्मात्रोरपत्यं

---

ऋषिभिन्न से अपत्य अर्थ में अञ् प्रत्यय हो, और ऋषिवाचक शब्द से गोत्र अर्थ में अञ् प्रत्यय हो।

१ गोत्र अर्थ में यञन्त और अञन्त जो प्रातिपदिक, तदवयव जो यञ् और अञ् उनका लुक् हो, यदि प्रत्ययकृत ही बहुत्व हो तो, परन्तु स्त्रीलिङ्ग में नहीं हो।

२ शिवादि गणपठित शब्द प्रकृतिक षष्ठ्यन्त समर्थ से अण् प्रत्यय हो, अपत्य अर्थ में।

३ ऋषि वाचक, अन्धक वाचक, वृष्णि वाचक, कुरु वाचक शब्दप्रकृतिक षष्ठ्यन्त समर्थ से अण् प्रत्यय हो, अपत्यार्थ में

४ संख्यावाचक, सम्-और भद्रपूर्वक जो मातृशब्द उसको उत् आदेश हो, और उससे अण् प्रत्यय भी हो।

संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण् प्रत्ययश्च। द्वैमातुरः। षाण्मातुरः। सांमातुरः। भाद्रमातुरः॥

[1]स्त्रीभ्यो ढक्। ४। १। १२०॥

स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात्। वैनतेयः॥

[2]कन्यायाः कनीन च। ४। १। ११६॥

चादण्। कानीनो-व्यासः, कर्णश्च॥

[3]राज-श्वशुराद्यत्। ४। १। १३७॥

* [4]राज्ञो जातावेवेति वाच्यम्॥

[5]ये चाऽभावकर्मणोः। ६। ४। १६८॥

यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भाव-कर्मणोः। राजन्यः। जातावेवेति किम्?।

[6]अन्। ६। ४। १६७॥

अन प्रकृत्या स्यादणि परे। राजनः। श्वशुर्यः॥

---

द्वैमातुरः=श्रीगणेशः। 'तद्धितार्थे'ति तद्धितार्थे समासः। षण्णां मातृणामपत्यं षाण्मातुरः=कार्तिकेयः। कन्याया अपत्यं-कानीनः।

जातावेवेति। प्रकृतिप्रत्ययसमुदायेन जातिश्चेद्वाच्येत्यर्थः। प्रत्ययस्तु अपत्ये एव। राज्ञोऽपत्यं-राजन्यः क्षत्रियः। राज्ञोऽपत्यं दास्यादावुत्पन्नो—राजनः।

---

१ स्त्रीप्रत्ययान्तप्रकृतिक षष्ठ्यन्तसमर्थ से ढक् प्रत्यय हो, अपत्य अर्थ में।

२ कन्याशब्दप्रकृतिक षष्ठ्यन्त समर्थ से अण् प्रत्यय हो, और कन्या शब्द को कनीन आदेश भी हो, अपत्य अर्थ में।

३ राजन् शब्द और श्वशुरशब्द प्रकृतिक षष्ठ्यन्त समर्थ से यत् प्रत्यय हो, अपत्य में।

४ राजन् शब्द से जाति में हो (अर्थात् प्रकृतिप्रत्ययसमुदाय से जहाँ जाति वाच्य हो वहीं) यत् प्रत्यय हो।

५ तद्धितसञ्ज्ञक यादिप्रत्यय परे रहते अन् प्रकृति से रहे, भावकर्म को छोड़ करके। ६ अन् प्रकृति से रहे, अण् परे रहते।

[1]क्षत्राद्घः । ४ । १ । १३८ ॥

क्षत्रियः । जातावित्येव । क्षात्रिरन्यत्र ।

[2]रेवत्यादिभ्यष्ठक् । ४ । १ । १४६ ॥

[3]ठस्येकः । ७ । ३ । ५० ॥

अङ्गात्परस्य ठस्येकादेशः स्यात् । रैवतिकः ॥

[4]जनपदशब्दात्क्षत्रियादञ् । ४ । १ । १६८ ॥

जनपद-क्षत्रियवाचकाच्छब्दादञ् स्यादपत्ये । पाञ्चालः ।

* [5]क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् * । पञ्चालानां राजा—पाञ्चालः । * [6]पूरोरण् वक्तव्यः * । पौरवः । * [7]पाण्डोर्ड्यण् * । पाण्ड्यः ॥

---

श्वशुरस्यापत्यं श्वशुर्यः = श्यालः । जनपदेति । जनपदवाची सन् यः क्षत्रियवाची, तत्प्रकृतिकषष्ठ्यन्तादपत्येऽञ्स्यादित्यर्थः । पञ्चालस्यापत्यं—पाञ्चालः । पाञ्चालादिशब्दा हि बहुवचनान्ता देशविशेषवचनाः, एकवचनान्ताश्च क्षत्रियवाचकाः ।

क्षत्रियेति । क्षत्रियेण समानः शब्दो यस्य जनपदस्य असौ क्षत्रियसमानशब्दस्तस्माज्जनपदवाचिनः षष्ठ्यन्ताद्राजनि वाच्येऽपत्यवत्प्रत्ययो भवतीत्यर्थः । (पाञ्चालः = फर्रुखाबाद जिला प्रदेश) । पूरोरपत्य—पौरवः । पौरवौ । पूरवः ।

---

१ क्षत्रशब्दप्रकृतिक षष्ठ्यन्त समर्थ से घप्रत्यय हो, अपत्यार्थ में, जातिवाच्य हो तो । २ रेवत्यादिगणपठितशब्दप्रकृतिक षष्ठ्यन्त समर्थ से ठक् प्रत्यय हो ।

३ अङ्ग से परे जो ठ उसको इक आदेश हो ।

४ जनपदवाची ( होता हुआ ) जो क्षत्रियवाची शब्द, तत्प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से अञ् प्रत्यय हो, अपत्य अर्थ में ।

५ क्षत्रियसमानशब्द जो जनपद वाचक शब्द, उसके राजा में अपत्यवत् प्रत्यय हो । अर्थात् अपत्य अर्थ में जो २ प्रत्यय होते हैं, वे राजा अर्थ में भी हों ।

६ पूरुशब्दप्रकृतिक षष्ठ्यन्त समर्थ से अण् प्रत्यय हो, अपत्यार्थ में ।

७ पाण्डुशब्द प्रकृतिक षष्ठ्यन्त समर्थ से ड्यण् प्रत्यय हो, अपत्य अर्थ में ।

